ओ३म्

महर्षिपाणिनिप्रणीतः

# AṢṬĀDHYĀYĪSŪTRAPĀṬHḤ

# अष्टाध्यायीसूत्रपाठः

वार्तिक-गणपाठ-सहितः
अनुवृत्ति-निर्देश-समन्वितश्च

गुरुकुलवृन्दावनस्नातकशोधसंस्थानान्तर्गत
आदित्यप्रकाश आर्य 'आदित्य-पीठेन'
च प्रकाशितः

नवम्बर, २०००

ओ३म्

# अष्टाध्यायीसूत्रपाठः

## वार्तिक-गणपाठ-सहितः

## अनुवृत्ति-निर्देश-समन्वितश्च

वृन्दावनस्थ-गुरुकुल-विश्वविद्यालय
मुख्याध्यापक-पदमलंकुर्वता,
काव्यतीर्थ उपाधिधारिणा,
श्रीशङ्करदेवपाठकेन
सम्पादितः

गुरुकुलवृन्दावनस्नातकशोधसंस्थानान्तर्गत
आदित्यप्रकाश आर्य 'आदित्य-पीठेन'
च प्रकाशितः।

२०००

प्रकाशक :
गुरुकुलवृन्दावनस्नातकशोधसंस्थानम्
७४, तरुण-एन्क्लेव, पीतमपुरा,
दिल्ली-११००३४

**पुस्तकप्राप्तिस्थानम्**
चौखम्बा ओरियन्टालिया
पोस्ट बाक्स नं. २२०६
बंगलो मार्ग :, ९-यू. बी. जवाहर नगरम्,
किरोड़ीमल महाविद्यालयस्य समीपम्,
दिल्ली-११०००६ (भारतम्)

पञ्चम्संस्करणम्
[redacted] २०००

मूल्यम् - पञ्चाशत् रूप्यकाणि

मुद्रक :- पैकिंग प्रिंटर्स, सब्ज़ी मण्डी, दिल्ली

# श्रीमन्तः श्रीधरदयालुमहोदयाः



**श्रीमन्तः श्रीधर दयालु महोदयाः**
**येषां द्रव्य साहाय्येन संस्थापितेयं ग्रन्थमाला**
**अभिनवान् ग्रन्थान् प्रकाशयति**

श्रीमतः श्रीधरस्यार्थ-साहाय्येन प्रकाशितम्।
सगणं वार्त्तिकैर्युक्तम्, अष्टकं पाणिनीयकम्।।१।।
श्रीमान् शङ्करदेवोऽयम्, प्रमुखाध्यापकः कुले।
व्यधात् सम्पादनं चास्य, छात्राणां हित चिन्तकः।।२।।

वैयाकरणधुरीण आचार्य शंकरदेव जी पाठक, मुख्याध्यापक गुरुकुल वृन्दावन ने छात्रों के हित के लिए अष्टाध्यायी (वार्तिकगणपाठयुक्त) का सुरुचिपूर्ण सम्पादन किया। इसका प्रथम संस्करण १९९६ विक्रमी में श्रीमान् श्रीधर जी दयालु द्वारा प्रदत्त दान राशि से स्थापित 'श्रीधर गुरुकुल ग्रन्थमाला' से प्रकाशित हुआ।

# वदान्य-श्रेष्ठी श्रीआदित्यप्रकाश आर्यः



आर्यादित्यप्रकाश एष सुतरां वेदस्य रक्षाव्रती,
पाणिन्यष्टकमां सवार्तिक-गणं स्वादित्यपीठेन वै।
तन्मुद्रार्पयितुं ह्युदारहृदयश्चक्रेऽर्थदानं यदा,
स्वीचक्रे च दयावती गुणवती तद्धर्मपत्नी मुदा।।

(निरन्तर वेद-रक्षा-व्रती पानीपत निवासी दानि-प्रवर श्री आदित्य प्रकाश आर्य ने "आदित्य-पीठ" के द्वारा इस वार्तिक-गणपाठ-सहित 'अष्टाध्यायी सूत्रपाठ' को प्रकाशित करने के लिये उदार हृदय से आर्थिक सहायता प्रदान करने का निश्चय किया, तब उनकी गुणवती धर्मशीला पत्नी श्रीमती दयावती जी ने प्रसन्नता-पूर्वक अपनी अनुमोदित स्वीकृति प्रदान की।

# पञ्चम-संस्करण-प्रस्तुतौ
# प्रस्तावाऽनुवाक्

सर्वज्ञानमयीं भाषां, वैदिकीमादिमामिमाम्।
अददात् सच्चिदानन्दो, जीवानुग्रह-कांक्षया।।१।।

स्यूतं व्याकरणं यत्र, सर्वशास्त्राभिभूषणम्।।
लोक-कल्याणकामाय, तस्मै सर्वात्मने नमः।।२।।

यावत्यो लोकभाषा हि, लुप्ता वा सन्ति साम्प्रतम्।
तासु गीर्वाण-वाणीयम्, विशिष्टैव निगद्यते।।३।।

अनादि-निधना नित्या, दैवी वागजराऽमरा।
आदि-कालादियं भाषा, मूल-रूपेऽवतिष्ठते।।४।।

सकलानां तु भाषाणां, दैवीयं जननी मता।
अपभ्रंशास्ततो जाता, दीर्घ-सम्पर्क-वर्जनात्।।५।।

प्रास्ताव्यंश्च पाश्चात्या, वैज्ञानिक-निचोलके।
परं नार्हन् समाधातुं, भाषां प्रस्तुत्य चेतराम्।।६।।

सृष्टेरादेश्च या भाषा, जीविताऽद्याऽपि वर्त्तते।
नूतना काव्यसृष्टिर्वै, मृता सा घोष्यते कथम्?।।७।।

कौमुद्याः पाठनेनाद्य, लम्बवृत्तेश्च घोटने।
दुरूहं संस्कृतं जातं, छात्रास्त्वातङ्किताः समे।।८।।

प्रोवाचर्षिदयानन्दः, शब्द शास्त्र प्रबोधनम्।
अल्पकालेन सम्भाव्यं, पाणिनीयाष्टक-क्रमे।।९।।

यथोत्तर-मुनीनांच, प्रामाण्यमधिगच्छता।
पुनर्भट्टोजिनाश्चर्यं, भाष्यकारो निरादृतः।।१०।।

तथापि हा कथंविज्ञैः, पाठ्यते कौमुदी-क्रमः।
पर्वतोत्खननेऽनेन लप्स्यते हि वराटिका।।११।।

नो मया भाषया देवतानां विना, बुद्धि-वाचा-विचाराः परिष्कारिताः।
सम्भवन्तीह तस्यास्तु सम्बोधने, पाणिनेः शब्दशास्त्रं बुधैः सम्मतम्।।१२।।

आकुमारं यशः पाणिनेरद्भुतम्,
सर्वदिग्देश-कालेपु सम्प्रास्तृतम्,
धातु-सूत्रेष्टि-लिङ्गाढ्य-शिक्षा-गणैः।
वार्तिकैः पूरितं पाणिनीयं मतम्॥१३॥

पाणिनीयं च संक्षिप्त-तम-व्याकरणं भुवि।
रचना-कौशलं दृष्ट्वा, मोहिता विस्मयं गताः॥१४॥

मोनियर्विलियम् तेषु, मैक्समूलर-पण्डितः।
कोलब्रुक्-हण्डरश्चाऽपि, प्रशशंसुर्मुहुर्मुहुः॥१५॥

न्यूनत्वं त्वपसारितं सुविशदैः कात्यायनैर्वार्त्तिकैः।
तन्मुक्तं तु पतञ्जलिर्मुनिरसौ भाष्येण पूर्णं व्यधात्।
तन्-सुक्तं ह्यपि भोजनामनृपतिर्विद्वत्-समा-भूषणः,
शब्दज्ञाः खलु चन्द्रगोभि-प्रमुखाःशिष्टं सुपूर्णं व्यधुः॥१६॥

पूर्वं व्याकरणाम्बुधिर्ह्यतितरां मान्यो विशालोऽभवत्,
छित्त्वा चाल्पमिमं व्यधात् सुरगुरुः पश्चाच्शतांशं ततः।
दंवानां पतिरिन्द्र ऐन्द्रमकरोदन्ते मुनिः पाणिनिः,
बिन्दुं पूत-कुशाग्र भाग-विधृतं चक्रे महाधीर्मुहुः॥१७॥

एवं वन्द्य-मुनित्रयं व्यरचयत् शब्दानुशास्तिं पराम्,
बालग्राह्यचमत्कृति-प्रणिहितां सद्-वेद-पाल्यां मुदा।
तस्माद्वैदिक कोविदाः प्रतिदिनं स्वाध्यायमामन्त्रयन्,
अस्याः कामदुघं निरन्तरमिमं लोकोत्तरं श्रद्धया॥१८॥

यावत् कालत एव बौद्ध-सुबुधः श्रीधर्मकीर्तिर्महान्।
त्यक्त्वा वैदिक-सूत्रजालमपि वा भाषीय-सूत्राणि च।
न्यूनीकृत्य प्रयोगमुख्यविधिना 'रुपावतारं' स्वकम्,
प्राणैषीच्च ततोऽष्टकस्य पठनं शैथिल्यमापद्यत॥१९॥

यद्यप्यत्र च पाणिनीयसरणिं त्वालम्ब्य सूत्रार्थकम्,
कृत्वा नो रटितुं समादिशदयं वृत्तिं वहन् कुत्रचित्।
अद्यत्वेऽ बुध-पाठको न सुतरां जानाति वृत्तेर्विधिम्,
अन्धेनैव तु नीयते खलु यथान्धश्चैव मेषोऽपिवा॥२०॥

पाणिनीयकपद्धत्याः प्रसार-श्रेयसे पुनः।
दण्डी श्रीविरजानन्दः प्रज्ञा-चक्षुर्बभूव ह।।२१।।

एकदाऽष्टक-पाठस्य, कर्ण आपतितः स्वरः।
दाक्षिणात्यो दशग्रन्थी, ब्राह्मणः कश्चिदास्थितः।।२२।।

दण्डी प्राहूयं तं विप्रं पारायणा माकर्णयत्।
निश्चिकाय दिने तस्मिन्, आर्ष-पद्धति-पाठनम्।।२३।।

दाक्षिणात्यौ च कौचिद् वै, दण्डिनोऽन्तिकमागतौ।
धारयित्वा पिपठिषां, श्रद्धयाऽ वदतां नतौ।।२४।।

सोमनाथोऽपरो गोपी-नाथः प्रार्थयतां गुरुम्।
परमानुग्रहेणावाम्, कुर्याद् देव कृतार्थिनौ।।२५।।

कत्त्रयः शेखरो ग्रन्थाः, कौमुदी च मनोरमा।
तान् प्रवाहयतं शीघ्रं, गुरुवर्यः समादिशत्।।२६।।

पश्यन्तु तीव्र-सन्दाहो दण्डिनो हृदयेऽज्वलत्।
अनार्ष-ग्रन्थविद्रोहः कियान् तीव्रो ह्यवर्त्तत।।२७।।

गुरोर्हृदय-वह्निं तं, समादाय सरस्वती।
दयानन्दोऽदहल्लङ्काम् अनार्षग्रन्थ-सञ्चिताम्।।२८।।

मूलशङ्कर-सम्प्राप्ताम्, अष्टाध्यायी-परम्पराम्।
आश्रित्य सरलां व्याख्यां शाङ्करीं शङ्करो व्यधात्।।२९।।

स्वर्वाचाऽध्ययनस्थले गुरुकुले वृन्दावनीयावनौ,
शश्वद्-दर्शन-शास्त्र वारिधि-सुमन्थायाप्त मन्थाचलः।
यत्राराजत शारदा-वरसुतोऽसौ विश्वविद्यालये,
पाण्डित्य-प्रतिभाविभूषितमतिश्चाचार्य-विश्वेश्वरः।।३०।।

धन्या सा वसुधा सुधा-सुरसरित् यत्रावहद् वैदिकी,
श्रीमत्शंकरदेवपाठक-सुधीर्दाक्षी-सुतस्याष्टकम्।
प्राणैषीत् सगणं सवार्तिकमिदं सम्पादयामास च,
साहाय्यं पथदर्शने समकरोदाचार्य विश्वश्रवा:॥३१॥

आदित्य-प्रभवं प्रकाशमिव तत् प्राकाशयच्चाष्टकम्,
छात्राणामुपकारणे सुनिरत: साहाय्यमर्थेन वै।
कृत्वोत्साहमवाप्य साधुमनसा सम्पादनोत्कोऽभवत्,
श्रीमन्नन्दकिशोर आर्षसुधिया यायावराणां वर:॥३२॥

द्विस्त्रि:कृत्य चतुर्थवारमपिवा पुण्य-स्मृतौ पुत्रयो:,
प्राकाश्यं ह्यनयत् सुधीरमतिमान् वेदप्रकाशात्मना।
सद्योगेन सुशील-धर्म-गृहिणीच्छाया: प्रशस्तेन च,
जीव्याद् वर्ष-शतं श्रुतिं च समवन्नादित्यपीठेन स:॥३३॥

ओमानन्द सरस्वती, निरदिशल् लिङ्गानुशास्त्यायुतम्,
सानन्दो विरजोऽपि दैवकरणि: फिट्-सूत्र-संयोजितम्,
प्राकाश्यं ह्यनयत् तदष्टकमिद छात्रोपकारेच्छया,
अद्यादित्यप्रकाशदत्त-विभवैरादित्य-पीठं व्यधात्॥३४॥

सूर्यप्रकाश-सङ्काशामेतां जिज्ञासवो यदि।
अध्येष्यन्ते तदा नूनं सम्प्रबोधो भविष्यति॥३५॥

ब्रह्मचर्यतप:-पूत-निष्ठां निर्मलाम् मुदा।
आप्स्यन्ति पाठका: नूनं विशुद्धानन्ददायिनीम्॥३६॥

अनुवाग्-लेखक:
**आचार्यडा.विशुद्धानन्दमिश्र:** पूर्वकुलपति:
**अध्यक्ष:**, गुरुकुलवृन्दावनस्नातकशोध-संस्थानम्

# विषयानुक्रमाणिका

## अष्टाध्यायी सूत्र पाठः

# किञ्चित्प्रास्ताविकम्

व्याकरणं नाम वेदाङ्गेषु मुख्यमङ्गमिति न तिरोहितं विपश्चिताम्। तस्मिंश्च व्याकरणे सन्ति इन्द्रचन्द्रादिकृताः प्रस्थानभेदाः। तेषु सर्वेष्वपि पाणिनीयतन्त्रमेव लौकिकवैदिकप्रक्रियापरिपूर्णतया सर्वत्र लब्धप्रचारमधुनोपलभ्यते।

यद्यपि पाणिनीयतन्त्रस्य मूलं भगवत्पाणिनिनिर्मितः सूत्रपाठ एव, तथापि साम्प्रतं लक्ष्यक्रममाश्रित्य तत्तत्समानजातीयप्रक्रियाणामेकत्र संकलनेन शब्दान्वाख्यानप्रदर्शनसरणिमनुसृतवद्भिः श्री भट्टोजि-दीक्षित-प्रभृतिभिर्विरचितानां सिद्धान्तकौमुद्यादिग्रन्थानां बहुलप्रचारतया सूत्रपाठो विरलप्रचारः समजनि। अधुना च लक्षणक्रमेणैव तत्तल्लक्षणप्रवृत्तिप्रदर्शनपूर्वकं लक्ष्यान्वाख्यानसरणिरेव पाणिनेरभीष्टेति निश्चितमतिभिरनूचानैः पुनरपि सूत्रपाठक्रमेणै व व्याकरणाध्ययनाध्यापनाभ्यां यत्न आस्थीयते।

तत्र तत्र मुम्बई-काश्यादिषु बहुशो मुद्रितेऽपि सूत्रपाठे जागर्त्येव सर्वात्मना रुचिरस्यार्थनिर्वचनसौलभ्यसम्पादकस्यैकस्य संस्करणस्यावश्यकत्वम्। अतोऽष्टाध्यायी-क्रमेण व्याकरणाध्ययनाध्यापनोत्कण्ठितचेतसां केषाञ्चित्सुहृद्वराणां निदेशेन प्रोत्साहनेन च प्रावर्तिषि पण्डितप्रकाण्डैकसाध्ये सुदुष्करेप्यस्मिन्कर्मणि।

सूत्रपाठस्यास्मिन्संस्करणेऽस्माभिः तत्तत्सूत्र-विषयानुसारं प्रकरणानि परिकल्प्य प्रकरणविभागः सम्पादितः। सर्वथा लाघवं कामयमानेनातएवानुवृत्ति-परायणेनाचार्येण नावहितं प्रकरणपूर्वकं सूत्रप्रणयनकर्मणि क्वचिदतिदेशसूत्राणि संज्ञासूत्रान्तः पातयति। यथा 'दाधाध्वदाप् (१।१।२०) 'बहुगणवतुडतिसंख्या' (१।१।२३) इति संज्ञा प्रकरणे 'आद्यन्तवेदकस्मिन्' इत्यतिदेशसूत्रमुपक्षिप्तम्। कुत्रचित्प्रत्ययविकारागमप्रकरणे प्रातिपदिकादेशं विदधाति। यथा 'आमि सर्वनाम्नः सुट्' (७।१।५२) इत्याम आगमप्रकरणे 'त्रेस्त्रयः इति त्रयादेशमुपदिशति। अत्र 'आमि' इति पदानुवृत्तिरेवेदृशक्रमभङ्गे हेतुः। प्रायः सर्वत्रैवेदृशः क्रमभङ्गो, विशेषतस्तु विकारप्रकरणे (षष्ठ-सप्तमाष्टमाध्यायेषु) समुपलक्ष्यते। सुप्तिङ्प्रक्रिये तु सर्वथैव व्यामिश्र्योक्ते आचार्येण। अतः सूत्राणां प्रकरणेषु विभाजनमतीव दुष्करं यद्यपि, तथापि यावद्बुद्धिबलोदयं सम्पाद्य निर्दिष्टं, तत् संशोधयन्तु विद्वांसः।

किञ्च, सिद्धान्तकौमुद्यादीनामध्ययनाध्यापनयोः तत्तत्सूत्रस्थपदानुवृत्तेर्ज्ञानाभावाद् वृत्तिरटनश्रमेण महान् क्लेशोऽनुभूयते तदध्येतृभिः। अष्टाध्याय्याः क्रमे त्वनुवृत्तिज्ञानसौकर्याद् अर्थनिर्वचनं सुबोधं नन्वतितराम्। अतोऽनुवृत्तिज्ञानायास्माभिर्वामपार्श्वे यत्सूत्रात् यस्य पदस्य यावदनुवृत्तिस्तत्पदं विलिख्य तदग्रे सूत्रसंख्या विन्यस्ता। दक्षिण-पार्श्वे च यत्र सूत्रे पूर्वसूत्रेभ्यो यत्पदानुवृत्तिस्तपदं समुपन्यस्तम्। सूत्रस्थ पदानामनुवृत्तपदानाञ्च

समन्वयेन सूत्रार्थो झटित्येव बुद्धिमारोहति सुकुमारधियामपि बालानाम्।

अत्रेत्थं संकेत-विवरणं द्रष्टव्यम्–

| वाम पार्श्वे | मध्ये | दक्षिण पार्श्वे |
|---|---|---|
| यस्मात् सूत्रात् यस्य पदस्यानुवृत्तिर्गच्छति तत्पदं, संख्या च | सूत्रपाठः प्रकरणविभागश्च | यस्य पदस्यानवृत्तिर्यस्मिन् सूत्र आयति तदग्रे तत्पदम् |

दक्षिणवामपार्श्वयोः, संक्षेपाय सर्वपदस्थाने तस्य संक्षिप्तं रूपं प्रादर्शि। यथा 'सार्वधातुके' इत्यस्य स्थाने 'सा–के' एवं निर्दिष्टम्। यत्र पदद्वयस्य अधिकानां वा पदानां समानोऽवधिस्तत्रान्तिमपदसंमुख एव प्रायोऽङ्कविन्यासो नेतरत्र। यथा 'अपरिमाण–न तद्धितलुकि' (४।१।२२) अत्र 'न' इति ''तद्धितलुकि' इति पदस्य च २४ तम–सूत्रपर्यन्तमनुवृत्तिः। सूत्राङ्कोल्लेखस्तु 'तद्धितलुकि' इति पदसंमुख एव।

अत्र च एतत्प्रकटनसाहाय्यकर्तृणाम्, अन्तरान्तरामातृकाप्रदानलेखावधान प्रकटनप्रख्यापनादिद्वारा भृशमुपकारिणाम् अनसूयूनाम् अनहंयूनाम् अनशुभंयूनाम्, अवदातधियाम् अनुवारम् अयुतशः प्रणामाः प्रतायन्ते प्रह्वशिरोवाङ्मनसेन मया।

तत्र सर्वथा प्राधान्यं वहन्ति वृन्दावन–गुरुकुल विश्वविद्यालये आचार्य पदमधितिष्ठन्तः सारस्वत सारज्ञाः श्रीमन्तो **विश्वेश्वर** महाभागाः। येषां हि साहाय्येन मदीयमिदं सूत्रपाठमुद्रणं प्रचलति स्मेति सतोषमभिधीयते। किञ्चात्र सम्पादनपथे यत्र–तत्र सम्मति प्रदानेन यथाशक्ति साहाय्यं कृतवतां कार्यसिद्धिञ्च प्रतीक्षितवतां वैयाकरणधुरीणानाम् आचार्य **विश्वश्रवसाम्** अत्यन्तमध्यन्तरङ्गमनवरतमस्मि स्मरन्नधिकमुपकारम्। अन्ते च गुरुकुलमुख्याधिष्ठातृमहोदयानां **श्रीचेतरामसिंह** महाभागानामप्युपकारो विस्मर्तुमनर्हः, येषां प्रेरणया सहानुभूत्या च शीघ्रमेव समाप्तिमगादिदं दुष्करं कार्यम्।

संस्करणस्यास्य सम्पादन इमान्यादर्श–पुस्तकानि।

**(१) अष्टाध्यायी सूत्र पाठः–**

(१) भाष्य–स्वीकृतः सूत्रपाठः।

(२) काशिकायां स्वीकृतः सूत्रपाठः।

(३) निर्णयसागर मुद्रितः सूत्रपाठः।

(४) पण्डित–प्रवर–श्रीभीमसेनशर्मसम्पादितः सूत्रपाठः।

(५) राजकीय–प्राच्यग्रन्थश्रेण्यां पुण्यपत्तनात् प्रकाशितः सूत्रपाठः।

सर्वत्र भाष्ये स्वीकृत एव पाठोऽस्माभिरङ्गीकृतः। यस्मिन् सूत्रे भाष्यं न विद्यते तस्य सूत्रस्य पाठः संशोध्य प्रदत्तः। अन्यत्रोपलभ्यमानाः पाठभेदा अधोभागे टिप्पण्यां निर्दिष्टाः।

**( २ ) वार्तिकपाठः**–अत्रापि महाभाष्य-स्वीकृत एव पाठोऽस्माभिरुररीकृतः। पाणिनेरष्टाध्यायीसूत्रपाठः प्रायेण निश्चितः। यद्यपि तत्र पाठभेदा उपलभ्यन्ते तथापि नास्ति तेषामाधिक्यम्। परन्तु कात्यायनस्य कानि वार्तिकानि, कानि वा महाभाष्यप्रणेतुः पतञ्जलेस्तथैव कानि वा सौनाग-भारद्वाजादीनां वचनानि एतन्निर्णेतुं नाद्यापिअल्पांशेनापि तर्कमन्तरा निश्चयप्रदं साधनं दृश्यते। बहूनि च वार्तिकानि सूत्रकारश्रद्धातिशयवता भाष्यकृता प्रत्याख्यातानि। अतएव काशिकाकारादिभिः स्वस्वग्रन्थेषु सिद्धान्तवार्तिकान्येव सङ्गृहीतानि। अस्माभिरपि तत्संगृहीतान्येव प्रदत्तानि तानि, पाठस्तु तेषां भाष्यस्वीकृतः समुपन्यस्तः। यत्रापि तेषां काशिकादिषु पाठभेदः सूत्रभेदो वा लक्ष्यते सोऽधस्तात् टिप्पण्यामुद्धृतः।

**( ३ ) गणपाठः**–अत्र राजकीय प्राच्यग्रन्थश्रेण्यां प्रकाशितो गणपाठपाठ आदर्शतां नीतः।

तदेवमेतान् कोशानादर्शीकृत्य भाष्य-कैयट-काशिकादि-ग्रन्थानवष्टभ्य च परिष्कृत्य मुद्रितायामप्यस्यामष्टाध्याय्यां मुद्रणावसरसुलभसंभवान् मादृश-जनमनीषानियतसंभूतिकाँश्चापि संभावितान् काँश्चन दोषान् स्वयमेव परिहरन्तो मां बोधयन्तश्च नन्दन्तु निपुणधिषणाः, नन्दयन्तु चाखिलजगदन्तर्नियमयन्तं परमेश्वरमास्माकीनेनानेन सम्पादनकर्मणेति–

**सविनयं निवेदयति**

**विदुषामाश्रवः शंकरदेवपाठकः**

# अष्टाध्यायीसूत्रपाठः

## ( वार्तिक-गणपाठ-सहितः )

## प्रथमोऽध्यायः

### प्रथमः पादः

अथ शब्दानुशासनम्

| | |
|---|---|
| १ अइउण् | २ ऋलृक् |
| ३ एओङ् | ४ ऐऔच् |
| ५ हयवरट् | ६ लण् |
| ७ ञमङणनम् | ८ झभञ् |
| ९ घढधष् | १० जबगडदश् |
| ११ खफछठथचटतव् | १२ कपय् |
| १३ शषसर् | १४ हल् |

॥ इति प्रत्याहारसूत्राणि ॥

(वृद्धिसंज्ञा—)

१ वृद्धिरादैच् । वृद्धिः १

(गुणसंज्ञा—)

२ अदेङ् गुणः । गुणः १

(गुणवृद्धिस्थानिनियम—)

३ इको गुणवृद्धी । इकः ६
गुणवृद्धी १

| | | |
|---|---|---|
| | (गुणवृद्धिनिषेध—) | |
| गुणवृद्धी, इकः | ४ न धातुलोप आर्धधातुके । | न ६ |
| न गुणवृद्धी, ,, | ५ क्ङिति च । | |
| ,, ,, | ६ दीधीवेवीटाम् | |
| | (संयोगसंज्ञा—) | |
| | ७ हलोऽनन्तराः संयोगः । | |
| | (अनुनासिकसंज्ञा—) | |
| | ८ मुखनासिकावचनोऽनुनासिकः । | |
| | (सवर्णसंज्ञा—) | |
| | ९ तुल्यास्यप्रयत्नं सवर्णम् । (१) | सवर्णम् १० |
| सवर्णम् | १० नाज्झलौ । | |
| | (प्रगृह्यसंज्ञा—) | |
| | ११ ईदूदेद् द्विवचनं प्रगृह्यम् | ईदूत् १२<br>प्रगृह्यम् १८ |
| प्रगृह्यम् ईदूत् | १२ अदसो मात् । | |
| ,, | १३ शे । | |
| ,, | १४ निपात एकाजनाङ् । | निपातः १५ |
| ,, निपातः | १५ ओत् । | ओत् १६ |
| ,, ओत् | १६ सम्बुद्धौ शाकल्यस्येतावनार्षे । | शाकल्यस्येता-<br>ऽर्षे १७ |
| ,, शा—र्षे | १७ १८ उञः ऊँ । | |
| ,, | १९ ईदूतौ च सप्तम्यर्थे । | |
| | (घुसंज्ञा—) | |
| | २० दाधाध्वदाप् । | |

---

१—(वार्तिकम्) ऋकारलृकारयोर्मिथः सवर्णसंज्ञा वक्तव्या ।

(आद्यन्तवद्भाव—)

२१ आद्यन्तवदेकस्मिन् ।

(घसंज्ञा—)

२२ तरप्तमपौ घः ।

(संख्यासंज्ञा—)

२३ बहुगणवतुडति संख्या (१) संख्या २५

(षट्संज्ञा—)

संख्या २४ ष्णान्ता षट् । षट् २५

संख्या, षट् २५ डति च ।

(निष्ठासंज्ञा—)

२६ क्तक्तवतू निष्ठा ।

(सर्वनामसंज्ञा—)

२७ सर्वादीनि सर्वनामानि (२) सर्वादीनि ३२
सर्वनामानि ३६

सर्वादीनि, सर्व–नि २८ विभाषा दिक्समासे बहुव्रीहौ। बहुव्रीहौ २९

,, ,, २९ न बहुव्रीहौ । न ३१

,, न, ,, ३० तृतीयासमासे ।

,, , ,, ३१ द्वन्द्वे च । द्वन्द्वे ३२

---

१—(वा०) अर्धपूर्वपदश्च पूरणप्रत्ययान्तः संख्यासंज्ञो भवतीतिवक्तव्यम् ।

२—(गणपाठः) सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं वहिर्योगोपसंव्यानयोः ।

त्यद् तद् यद् एतद् इदम् अदस् एक ।

द्वि युष्मद् अस्मद् भवतु (भवत्) किम् ।

इति द्व्यादिः, त्यदादिः, सर्वादिश्च ।

| | | |
|---|---|---|
| द्वन्द्वे, न | ३२ विभाषा जसि । | विभाषा ३६ जसि ३६ |
| स-नि, स-नि सर्वनामानि, विभाषा, जसि | ३३ प्रथम-चरम-तयाल्पार्ध-कतिपय-नेमाश्च । | |
| ,, | ३४ पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । | |
| ,, | ३५ स्वमज्ञातिधनाख्यायाम् । | |
| ,, | ३६ अन्तरं बहिर्योगोपसंव्यानयोः। (१) | |

(अव्ययसंज्ञा—)

| | | |
|---|---|---|
| | ३७ स्वरादि-निपातमव्ययम् । | अव्ययम् ४१ |
| अव्ययम् | ३८ तद्धितश्चासर्वविभक्तिः । | |
| ,, | ३९ कृन्मेजन्तः । | |
| ,, | ४० क्त्वा-तोसुन्-कसुनः । | |
| ,, | ४१ अव्ययीभावश्च । | |

(सर्वनामस्थानसंज्ञा—)

| | | |
|---|---|---|
| | ४२ शि सर्वनामस्थानम् | सर्व—नम् ४३ |
| सर्व—नम् | ४३ सुडनपुंसकस्य । | |

(विभाषासंज्ञा—)

४४ नवेति विभाषा ।

(सम्प्रसारणसंज्ञा—)

४५ इग्यणः सम्प्रसारणम् ।

(आगमादेशस्थाननिर्देश—)

४६ आद्यन्तौ टकितौ ।

---

१—(वार्तिo) (क) अपुरीति च वक्तव्यम्। (ख) विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम्।

४७ मिदचोऽन्त्यात्परः । (१)

४८ एच इग्घ्रस्वादेशे ।

४९ षष्ठी स्थानेयोगा ।

५० स्थानेऽन्तरतमः ।

५१ उरण् रपरः ।

५२ अलोऽन्त्यस्य । — अलः ५३, अन्त्यस्य ५३

अन्त्यस्य, अलः — ५३ ङिच्च ।

५४ आदेः परस्य ।

५५ अनेकाल्शित्सर्वस्य ।

(स्थानिवद्भाव—)

५६ स्थानिवदादेशोऽनल्विधौ । — स्थानिवत् ५९, आदेशः ५९

स्थानिवत् आदेशः — ५७ अचः परस्मिन् पूर्वविधौ । — अचः ५९, परस्मिन् ५९

परस्मिन् अचः आदेशः, स्थानिवत् — ५८ न पदान्त-द्विर्वचन-वरे-यलोप-स्वर-सवर्णानुस्वार-दीर्घ-जश्च-रविधिषु ।

स्थानिवत् अचः पर०, आ० — ५९ द्विर्वचनेऽचि ।

(लोपसंज्ञा—)

६० अदर्शनं लोपः ।

६१ प्रत्ययस्य लुक्-श्लु-लुपः ।

(प्रत्ययलक्षण—)

६२ प्रत्ययलोपे प्रत्ययलक्षणम् । — प्रत्य–म् ६३

---

१—(वा०) मस्जेरन्त्यात्पूर्वो मिदनुषङ्गसंयोगादिलोपार्थम् ।

प्रत्ययलक्षणम् ६३ न लुमताङ्गस्य ।

(टिसंज्ञा—)

६४ अचोऽन्त्यादि टि ।

(उपधासंज्ञा—)

६५ अलोऽन्त्यात्पूर्व उपधा ।

६६ तस्मिन्निति निर्दिष्टे पूर्वस्य ।

६७ तस्मादित्युत्तरस्य ।

(शब्दस्वरूपग्राहक—)

६८ स्वं रूपं शब्दस्याशब्दसंज्ञा । (१) स्वम् ७२ रूपम् ७२

६९ अणुदित्सवर्णस्य चाप्रत्ययः ।

७० तपरस्तत्कालस्य ।

७१ आदिरन्त्येन सहेता ।

७२ येन विधिस्तदन्तस्य । (२)

(वृद्धसंज्ञा—)

वृद्धम् ७३ वृद्धिर्यस्याचामादिस्तद् वृद्धम् । (३)

" ७४ त्यदादीनि च ।

७५ एङ् प्राचां देशे ।

इति प्रथमः पादः ।

---

१—(वार्ति०) (क) सित्तद्विशेषाणां वृक्षाद्यर्थम् (ख) पित्पर्यायवचनस्य च स्वाद्यर्थम् (ग) जित्पर्यायवचनस्यैव राजाद्यर्थम् । (घ) झित्तद्विशेषाणाञ्च मत्स्याद्यर्थम् ।

२—(वार्ति०) (क) समासप्रत्ययविधौ प्रतिषेधः । (ख) उगिद्वर्णग्रहणवर्जम् ।

३—(वार्ति०) (क)—वा नामधेयस्य । (ख)—गोत्रोत्तरपदस्य च । (ग)—गोत्रान्ताद्वाऽसमस्तवत् । (घ)—जिह्वाकात्यहरितकात्यवर्जम् ।

# अथ द्वितीयः पादः

(ङित्वातिदेश—)

| | | |
|---|---|---|
| | १ गाङ्कुटादिभ्योऽञ्णिन्ङित्।(१) | ङित् ४ |
| ङित् | २ विज इट्। | इट् ३ |
| इट्, ङित् | ३ विभाषोर्णोः। | |
| ङित् | ४ सार्वधातुकमपित्। | अपित् ५ |

(कित्वातिदेश—)

| | | |
|---|---|---|
| अपित् | ५ असंयोगाल्लिट् कित्। | लिट् ६, कित् २६ |
| लिट्, कित् | ६ इन्धि-भवतिभ्यां च। (२) | |
| कित् | ७ मृड-मृद-गुध-कुष-क्लिश-वद-वसः क्त्वा। | क्त्वा ८ |
| क्त्वा, कित् | ८ रुद-विद-मुष-ग्रहि-स्वपि-प्रच्छः संश्च। | सन् १० |
| सन्, कित् | ९ इको झल्। | इकः ११, झल् १३ |
| इकः, सन्, झल्, कित् | १० हलन्ताच्च। | हलन्तात् ११ |
| हलन्तात्, इकः, झल्, कित् | ११ लिङ्-सिचावात्मनेपदेषु। | लिङ् सिचौ १३, आत्मनेपदेषु १७ |
| लिङ्सिचौ, आत्म०, झल्, कित् | १२ उश्च। | |
| ,, | १३ वा गमः। | |

१—(वा०) व्यचेः कुटादित्वमनसीति वक्तव्यम्। *
२—(वा०) ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेन।
३—(वा०) श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम्।*

* इदं वार्तिकम् भाष्ये न दृश्यते।

| | | |
|---|---|---|
| आत्म०, कित् | १४ हनः सिच् । | सिच् १७ |
| सिच्, आत्म०, कित् | १५ यमो गन्धने । | यमः १६ |
| यमः, सिच्, आत्म०, कित् | १६ विभाषोपयमने । | |
| सिच्, आत्म०, कित् | १७ स्थाघ्वोरिच्च । | |
| कित् | १८ न क्त्वा सेट् । | सेट् २६ न २५ |
| कित्, न, सेट् | १९ निष्ठा शीङ्-स्विदि-मिदि-क्ष्विदि-धृषः । | निष्ठा २२ |
| न, सेट्, कित्, नि० | २० मृषस्तितिक्षायाम् । | |
| न, सेट्, निष्ठा, कित् | २१ उदुपधाद् भावादिकर्मणोरन्यतरस्याम् । | |
| कित्, न | २२ पूङः क्त्वा च । | क्त्वा २६ |
| क्त्वा, सेट्, न, कित् | २३ नोपधात् थफान्ताद्वा । | वा २६ |
| क्त्वा, सेट्, न, कित् वा | २४ वञ्चि-लुञ्च्यृतश्च । | |
| क्त्वा, सेट्, न, कित् वा | २५ तृषि-मृषि-कृशेः काश्यपस्य । | |
| वा, सेट्, क्त्वा कित् | २६ रलो व्युपधाद्धलादेः संश्च । | |
| | (ह्रस्वादिसंज्ञा—) | |
| | २७ ऊकालोऽज्झ्रस्व-दीर्घ-प्लुतः । | ह्रस्व-प्लुतः २८ |
| | (ह्रस्वादिस्थाननिर्देश—) | |
| ह्रस्वदीर्घप्लुताः | २८ अचश्च । | |
| | (स्वरविधि—) | |
| | २९ उच्चैरुदात्तः । | |
| | ३० नीचैरनुदात्तः । | |

३१ समाहारः स्वरितः ।

३२ तस्यादित उदात्तमर्धह्रस्वम् ।

३३ एकश्रुति दूरात्संबुद्धौ । एकश्रुति ३९

एकश्रुति ३४ यज्ञकर्मण्यजप-न्यूङ्ख-सामसु । यज्ञकर्मणि ३५

यज्ञकर्मणि ३५ उच्चैस्तरां वा वषट्कारः ।

एकश्रुति ३६ विभाषा छन्दसि ।

एकश्रुति ३७ न सुब्रह्मण्यायां स्वरितस्य तूदात्तः । स्वरितस्य ३८

स्वरितस्य ३८ देवब्रह्मणोरनुदात्तः

एकश्रुति ३९ स्वरितात्संहितायामनुदात्तानाम् । अनुदात्तानाम् ४०

अनुदात्तस्य ४० उदात्तस्वरितपरस्य सन्नतरः ।

(अपृक्तसंज्ञा—)

४१ अपृक्त एकाल् प्रत्ययः ।

(कर्मधारयसंज्ञा—)

४२ तत्पुरुषः समानाधिकरणः कर्मधारयः ।

(उपसर्जनसंज्ञा—)

४३ प्रथमानिर्दिष्टं समास उपसर्जनम् । उपसर्जनम् ४४

उपसर्जनम् ४४ एकविभक्ति चापूर्वनिपाते । (१)

---

१—(वा०) एकविभक्तावषष्ठ्यन्तवचनम् ।

(प्रातिपादिकसंज्ञा—)

४५ अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । (१) — प्रातिपादिकम् ४६

प्रातिपदिकम् — ४६ कृत्तद्धित-समासाश्च ।

(ह्रस्वविधि—)

४७ ह्रस्वो नपुंसके प्रातिपदिकस्य । — ह्रस्वः ४८, प्रातिपदिकस्य ४८

प्रातिपदिकस्य, ह्रस्वः — ४८ गोस्त्रियोरुपसर्जनस्य । (२) — स्त्रियाः ४९, उसर्जनस्य ४९

(लुक्—)

उपसर्जनस्य, स्त्रियाः — ४९ लुक् तद्धितलुकि । — तद्धितलुकि ५०

(इदादेश—)

तद्धितलुकि — ५० इद्गोण्याः ।

(युक्तवद्भाव—)

तद्धित (स्य) — ५१ लुपि युक्तवद् व्यक्तिवचने । — लुपि, युक्तवत्, व्य—ने ५१

तद्धितलुपि, व्यक्ति—ने, युक्तवत् — ५२ विशेषणानाञ्चाजातेः । (३)

(अशिष्यत्व—)

५३ तदशिष्यं संज्ञाप्रमाणत्वात् । — अशिष्यम् ५७

---

१—(इष्टिः) अनर्थकस्यापि निपातस्य प्रातिपदिकसंज्ञेष्यते।

२—(वा०) ईयसो बहुव्रीहौ पुंवद्वचनम् ।[1]

३—(वा०) (क) [2] हरीतक्यादिषु व्यक्तिः (ख) खलतिकादिषु वचनम् (ग) मनुष्यलुपि प्रतिषेधः ।

---

[1] काशिकादिषु 'ईयसो बहुव्रीहेः प्रतिषेधो वक्तव्यः' इति वार्तिक पाठो दृश्यते। अस्माभिः भाष्यसम्मतः पाठ उपन्यस्तः। यथा पुंविषये ईकारः श्रूयते नतु ह्रस्वत्वं प्रतिपद्यते तथेयसोऽपि पर इत्यर्थः।

[2] आद्यं वार्तिकद्वयं काशिकादिषु ५१ सूत्रे दृश्यते। भाष्ये त्वत्रैव।

अशिष्यः ५४ लुब्योगाप्रख्यानात् ।

५५ योगप्रमाणे च तदभावेऽदर्शनं स्यात् ।

अशिष्यम् ५६ प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् । अर्थस्य, अन्यप्रमाणत्वात् ५७

अर्थ—त् ५७ कालोपसर्जने च तुल्यम् ।

(वचनातिदेश—)

५८ जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् । (१) बहुवचनम् ६०, अन्यतरस्याम् ६२

बहुवचनम् अन्य० ५९ अस्मदो द्वयोश्च । (२) द्वयोः ६०

द्वयोः, बहुवचनम् अन्यतरस्याम् ६० फल्गुनी-प्रोष्ठपदानां च नक्षत्रे ।

अन्यतरस्याम् ६१ छन्दसि पुनर्वस्वोरेकवचनम् । छन्दसि ६२

छन्दसि, एकवचनम्, अन्य० ६२ विशाखयोश्च ।

६३ तिष्य-पुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्

(एकशेष—)

६४ सरूपाणामेकशेष एकविभक्तौ । शेषः ७३

शेषः (शिष्यते) ६५ वृद्धो यूना तल्लक्षणश्चेदेव विशेषः । वृद्धोयूना ६६, तल्लक्षणश्चेदेव विशेषः ६९

---

१—(वा०) संख्याप्रयोगे प्रतिषेधः ।

२—(वा०) अस्मदः सविशेषणस्य प्रयोगे न ।[1]

---

[1] इदं वार्तिकं भाष्ये पूर्वसूत्र उपन्यस्तम् ।

वृद्धो–षः, शिष्यते　६६ स्त्री पुंवच्च ।

तल्लक्ष-षः, शिष्यते　६७ पुमान् स्त्रिया ।

शिष्येते　६८ भ्रातृ-पुत्रौ स्वसृ-दुहितृभ्याम् ।

शिष्यते, त–षः　६९ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ।　अन्यतरस्याम् ७१

अन्यतरस्याम्, शिष्यते　७० पिता मात्रा ।

अन्यतरस्याम्, शिष्यते　७१ श्वशुरः श्वश्र्वा ।

शिष्यन्ते　७२ त्यदादीनि सर्वैर्नित्यम् । (१)

शिष्यते　७३ ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री (२)

इति द्वितीयः पादः ८

## अथ तृतीयः पादः ।

(धातुसं—)

१ भूवादयो धातवः ।

(इत्संज्ञा—)

२ उपदेशेऽजनुनासिक इत् ।　इत् ८, उपदेशे २

उपदेशे, इत्　३ हलन्त्यम् ।

इत्　४ न विभक्तौ तुस्माः ।

---

१—(वा०) (क) त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि।[1] (ख) त्यदादीनां मिथो यद्यत्परं तत्तच्छिष्यते।[2]

२—(वा०) अनेकशफेष्विति वक्तव्यम्।

---

[1] इदं वार्तिकं काशिकादिष्वस्मिन् सूत्रे न दृश्यते।

[2] इदं वार्तिकं भाष्येऽस्मिन् सूत्रे नोपलभ्यते।

| | | |
|---|---|---|
| इतः | ५ आदिर्ञिटुडवः । | आदिः ८ |
| आदिः, इत् | ६ षः प्रत्ययस्य । | प्रत्ययस्य ८ |
| प्रत्ययस्य, आदिः, इत् | ७ चुटू । | |
| प्रत्ययस्य, आदिः, इत् | ८ लशक्वतद्धिते । | |
| | ९ तस्य लोपः । | |

(संख्यातानुदेश—)

१० यथासंख्यमनुदेशः समानाम् ।

(अधिकारस्वरूपनिर्देश—)

११ स्वरितेनाधिकारः ।

(आत्मनेपद—)

| | | |
|---|---|---|
| | १२ अनुदात्तङित आत्मनेपदम् । | आत्मनेपदम् ७७ |
| आत्मनेपदम् | १३ भावकर्मणोः । | |
| आत्मनेपदम् | १४ कर्तरि कर्मव्यतिहारे । | कर्तरि ७८, कर्मव्यतिहारे |
| कर्मव्य०, आत्म० | १५ न गतिहिंसार्थेभ्यः । (१) | १६ न १६ |
| कर्मव्य०, आत्मने०*, न | १६ इतरेतराऽन्योन्योपपदाच्च (२) | |
| | १७ नेर्विशः । | |
| | १८ परि-व्यवेभ्यः क्रियः । | |
| | १९ वि-पराभ्यां जेः । | |

---

१—(वा०) (क) प्रतिषेधे हसादीनामुपसंख्यानम् । (ख) हरतेरप्रतिषेधः ।

२—(वा०) परस्परोपपदाच्च ।

* आत्मनेपदानुवृत्तेः प्रतियोगमुपस्थीयमानत्वादुत्तरत्र न दर्शिता तदनुवृत्तिः । एवं कर्तरि इति पदानुवृत्तिरपि न दर्शिता । उत्तरत्राप्यधिकारेष्वेवं बोध्यम् ।

| | | | |
|---|---|---|---|
| | २० आङो दोऽनास्यविहरणे। | (१) | आङः २१ |
| आङः | २१ क्रीडोऽनु-सं-परिभ्यश्च। | (२) | |
| | २२ समव-प्र-विभ्यः स्थः। | (३) | स्थः २६ |
| स्थः | २३ प्रकाशन-स्थेयाख्ययोश्च। | | |
| स्थः | २४ उदोऽनूर्ध्वकर्मणि | (४) | |
| स्थः | २५ उपान्मन्त्रकरणे | (५) | उपात् २६ |
| उपात्, स्थः | २६ अकर्मकाच्च। | | अकर्मकात् २९ |
| अकर्मकात् | २७ उद्विभ्यां तपः। | (६) | |
| अकर्मकात् | २८ आङो यम-हनः। | | |
| " | २९ समो गम्यृच्छिभ्याम्। | (७) | |
| | ३० नि-समुप-विभ्यो ह्वः। | | ह्वः ३१ |
| ह्वः | ३१ स्पर्धायामाङः। | | |

१—(वा०) (क) आस्यविहरणसमानक्रियादपि प्रतिषेधो वक्तव्यः।[1] (ख) स्वाङ्गकर्मकाच्च।

२—(वा०) (क) समोऽकूजने। (ख) आगमेः क्षमायाम्। (ग) शिक्षेर्जिज्ञासायाम् (घ) आशिषि नाथः। (ङ) हरतेर्गतताच्छील्ये। (च) किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यम्। (छ) आङि नुप्रच्छ्योः। (ज) शप उपलम्भने।

३—(वा०) आङः स्थः प्रतिज्ञाने।

४—(वा०) उद ईहायाम्।

५—(वा०) (क) उपाद्देवपूजासंगतकरणमित्रकरणपथिष्विति वक्तव्यम्।[2] (ख) वा लिप्सायामिति वक्तव्यम्।

६—(वा०) स्वाङ्गकर्मकाच्च।

७—(वा०) (क) समो गमादिषु विदिप्रच्छिस्वरतीनामुपसंख्यानम्। (ख) अर्तिश्रुदृशिभ्यश्च। (ग) उपसर्गादस्यत्यूह्योर्वा वचनम्।

---

[1] काशिकादिषु पठ्यमानपि वार्तिकमिदं भाष्ये प्रत्याख्यातप्रायम्।

[2] 'संगतिकरणमित्रीकरण' इति काशिकादिसम्मतः पाठः।

| | | |
|---|---|---|
| | ३२ गन्धनावक्षेपण-सेवन-साहसिक्य-प्रतियत्न-प्रकथनोपयोगेषु कृञः । | कृञः ३५ |
| कृञः | ३३ अधेः प्रसहने । | |
| कृञः | ३४ वेः शब्दकर्मणः । | वेः ३५ |
| वेः, कृञः | ३५ अकर्मकाच्च । | |
| | ३६ संमाननोत्सञ्जनाचार्यकरण-ज्ञान-भृति-विगणन-व्ययेषु नियः । | नियः ३७ |
| नियः | ३७ कर्तृस्थे चाशरीरे कर्मणि । | |
| | ३८ वृत्ति-सर्ग-तायनेषु क्रमः । | क्रमः ४३, वृ—नेषु ३९ |
| वृत्ति—नेषु, क्रमः | ३९ उपपराभ्याम् । | |
| क्रमः | ४० आङ उद्गमने । (१) | |
| क्रमः | ४१ वेः पादविहरणे । | |
| क्रमः | ४२ प्रोपाभ्यां समर्थाभ्याम् । | |
| ,, | ४३ अनुपसर्गाद्वा । | |
| | ४४ अपन्हवे ज्ञः । | ज्ञः ४६ |
| ज्ञः | ४५ अकर्मकाच्च । | |
| ,, | ४६ संप्रतिभ्यामनाध्याने । | |
| | ४७ भासनोपसंभाषा-ज्ञान-यत्न-विमत्युप मन्त्रणेषु वदः । | वदः ५० |
| वदः | ४८ व्यक्तवाचां समुच्चारणे । | व्यक्तवाचां समुच्चारणे ५० |
| वदः, व्यक्त०, समु० | ४९ अनोरकर्मकात् । | |

१—(वा०) ज्योतिषामुद्गमने ।

| | | |
|---|---|---|
| वदः, व्यक्त०, समु० | ५० विभाषा विप्रलापे । | |
| | ५१ अवाद् ग्रः । | ग्रः ५२ |
| ग्रः | ५२ समः प्रतिज्ञाने । | |
| | ५३ उदश्चरः सकर्मकात् । | चरः ५४ |
| चरः | ५४ समस्तृतीयायुक्तात् । | समःतृ-युक्तात् ५५ |
| समःतृ-युक्तात् | ५५ दाणश्च सा चेच्चतुर्थ्यर्थे ।(१) | |
| | ५६ उपाद्यमः स्वकरणे । | |
| | ५७ ज्ञा-श्रु-स्मृ-दृशां सनः । | सनः ५९ |
| सनः | ५८ नानोर्ज्ञः । | न ५९ |
| सनः | ५९ प्रत्याङ्भ्यां श्रुवः । | |
| | ६० शदेः शितः | शितः ६१ |
| शितः | ६१ म्रियतेर्लुङ्लिङोश्च । | |
| | ६२ पूर्ववत्सनः | |
| | ६३ आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य । | |
| | ६४ प्रोपाभ्यां युजेरयज्ञपात्रेषु ।(२) | |
| | ६५ समः क्ष्णुवः । | |
| | ६६ भुजोऽनवने । | |
| | ६७ णेरणौ यत्कर्म णौ चेत्स कर्तानाध्याने । | णेः ७१ |

---

१—(वा०) अशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे भवतीति वक्तव्यम् ।*
२—(वा०) स्वराद्यन्तोपसृष्टादिति वक्तव्यम् ।

---

* भाष्येतु सूत्रगतं चेच्छब्दं चार्थे मत्वा, दाण आत्मनेपदं, सा (तृतीया) च चतुर्थ्यर्थे भवतीति व्याख्याय वार्तिकमिदं नोपन्यस्तम् ।

| | | |
|---|---|---|
| णेः | ६८ भीस्म्योर्हेतुभये । | |
| ,, | ६९ गृधिवञ्च्योः प्रलम्भने । | प्रलम्भने ७० |
| णेः, प्रल—ने | ७० लियः सम्मानन-शालीनीकरणयोश्च । | |
| ,, | ७१ मिथ्योपपदात्कृञोऽभ्यासे । | |
| | ७२ स्वरितञितः कर्त्रभिप्राये क्रियाफले । | कर्त्रभिप्राये क्रियाफले ७७ |
| कर्त्रभिप्राये क्रि० | ७३ अपाद्वदः । | |
| ,, | ७४ णिचश्च । | |
| ,, | ७५ समुदाङ्भ्यो यमोऽग्रन्थे । | |
| ,, | ७६ अनुपसर्गाज्ज्ञः । | |
| ,, | ७७ विभाषोपपदेन प्रतीयमाने । | |
| | (परस्मैपद—) | |
| | ७८ शेषात्कर्तरि परस्मैपदम् । | कर्तरि ९३ |
| परस्मैपदम् | ७९ अनुपराभ्यां कृञः । | |
| | ८० अभि-प्रत्यतिभ्यः क्षिपः । | |
| | ८१ प्राद्वहः । | वहः ८२ |
| वहः | ८२ परेर्मृषः । | |
| | ८३ व्याङ्-परिभ्यो रमः । | रमः ८५ |
| रमः | ८४ उपाच्च । | उपात् ८५ |
| उपात्, रमः | ८५ विभाषाऽकर्मकात् । | |
| | ८६ बुध-युध-नश-जनेङ्-प्रु-द्रु-स्रुभ्यो णेः । | णेः ८९ |
| णेः | ८७ निगरण-चलनार्थेभ्यश्च । (१) | |

---

१—(वा०) अदेः प्रतिषेधो वक्तव्यः ।

| | | |
|---|---|---|
| णेः | ८८ अणावकर्मकाच्चित्तवत्कर्तृकात् । | |
| णेः | ८९ न पा-दम्याङ्यमाङ्यस-परि-मुह-रुचि-नृति-वद-वसः । (१) | |
| | ९० वा क्यषः । | वा ९३ |
| वा | ९१ द्युद्भ्यो लुङि । | |
| वा | ९२ वृद्भ्यः स्यसनोः । | स्यसनोः ९३ |
| स्यसनोः, वा | ९३ लुटि च क्लृपः । | |

इति तृतीयः पादः

## अथ चतुर्थः पादः

| | | |
|---|---|---|
| | (एकसंज्ञाधिकार—) | |
| | १ आकडारादेका संज्ञा । | |
| | (विप्रतिषेधकार्यनिर्णय—) | |
| | २ विप्रतिषेधे परं कार्यम् । | |
| | (नदीसंज्ञा—) | |
| | ३ यू स्त्र्याख्यौ नदी | यू–६ नदी |
| नदी | ४ नेयङुवङ्स्थानावस्त्री । | इयङुवङ् स्थानौ ६ |
| इयङुवङ्-स्थानौ, नदी | ५ वामि । | वा ६ |
| इयङु-नौ,वा,नदी | ६ ङिति ह्रस्वश्च । | ह्रस्वः ७ |
| | (घिसंज्ञा—) | |
| | ७ शेषो घ्यसखि । | घि ९ |
| घि | ८ पतिः समास एव । | पतिः ९ |

१—(वा०) पादिषु धेट उपसंख्यानम् ।

पतिः, घि — ९ षष्ठीयुक्तश्छन्दसि वा ।

(लघुसंज्ञा—)

१० ह्रस्वं लघु । — ह्रस्वम् ११

(गुरुसंज्ञा—)

ह्रस्वम्, — ११ संयोगे गुरु । — गुरु १२

गुरु — १२ दीर्घञ्च ।

(अङ्गसंज्ञा—)

१३ यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ।

(पदसंज्ञा—)

१४ सुप्तिङन्तं पदम् । — पदम् १७

पदम् — १५ नः क्ये ।

" — १६ सिति च

" — १७ स्वादिष्वसर्वनामस्थाने । — स्वादिषु १८, असर्वनामस्थाने १८

(भसंज्ञा—)

स्वादिष्वसर्व० — १८ यचि भम् । (१) — भम् २०

भम् — १९ तसौ मत्वर्थे ।

भम् — २० अयस्मयादीनि छन्दसि ।

(वचनविनियोग—)

२१ बहुषु बहुवचनम् ।

२२ द्व्येकयोर्द्विवचनैकवचने ।

(कारक—)

२३ कारके । — कारके ५५

---

१—(वा०) (क) नभोङ्गिरोमनुषां वत्युपसंख्यानम् । (ख) वृषण्वस्वश्वयोः ।

(अपादानसंज्ञा—)

| | | |
|---|---|---|
| | २४ ध्रुवमपायेऽपादानम् । (१) | अपादानम् ३१ |
| अपादानम् | २५ भी-त्रार्थानां भयहेतुः । | |
| ,, | २६ पराजेरसोढः । | |
| ,, | २७ वारणार्थानामीप्सितः । | |
| ,, | २८ अन्तर्धौ येनादर्शनमिच्छति । | |
| ,, | २९ आख्यातोपयोगे । | |
| ,, | ३० जनिकर्तुः प्रकृतिः । | कर्तुः ३२ |
| ,, , कर्तुः | ३१ भुवः प्रभवः । | |

(सम्प्रदानसंज्ञा)—

| | | |
|---|---|---|
| | ३२ कर्मणा यमभिप्रैति स सम्प्रदानम् । (२) | सम्प्रदानम् ४१ |
| सम्प्रदानम् | ३३ रुच्यर्थानां प्रीयमाणः । | |
| सम्प्रदानम् | ३४ श्लाघ-ह्नुङ्-स्था-शपां ज्ञीप्स्यमानः । | |
| ,, | ३५ धारेरुत्तमर्णः । | |
| ,, | ३६ स्पृहेरीप्सितः । | |
| ,, | ३७ क्रुध-द्रुहेर्ष्यासूयार्थानां यं प्रति कोपः । | यं प्रति कोपः ३८ |
| यं प्रति कोपः | ३८ क्रुध-द्रुहोरुपसृष्टयोः कर्म । | |
| सम्प्रदानम् | ३९ राधीक्ष्योर्यस्य विप्रश्नः । | |
| ,, | ४० प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता । | पूर्वस्य कर्ता ४१ |

---

१—(वा०) जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् ।

२—(वा०) (क) क्रियाग्रहणमपि कर्तव्यम् । (ख) कर्मणः करणसंज्ञा संप्रदानस्य च कर्मसंज्ञा वक्तव्या ।

पू—कर्ता, सम्प्र०, **४१ अनुप्रतिगृणश्च**

(करणसंज्ञा—)

**४२ साधकतमं करणम् ।** करणम् ४२, साधकतमम् ४३

साधकतमम्, **४३ दिवः कर्म च ।**

करणम् ,, **४४ परिक्रयणे सम्प्रदानमन्यतरस्याम् ।**

(अधिकरणसंज्ञा—)

**४५ आधारोऽधिकरणम् ।** आधारः ४८

(कर्मसंज्ञा—)

आधारः **४६ अधि-शीङ्-स्थासां कर्म ।** कर्म ४८

,, कर्म **४७ अभि-नि-विशश्च ।**

,, ,, **४८ उपान्वध्याङ्वसः । (१)**

**४९ कर्तुरीप्सिततमं कर्म ।** कर्म ५३

कर्म **५० तथायुक्तं चानीप्सितम् ।**

,, **५१ अकथितञ्च ।**

,, **५२ गति-बुद्धि-प्रत्यवसानार्थ-शब्द कर्माकर्मकाणामणि कर्ता स णौ । (२)** अणि कर्ता स णौ ५३

अणि कत स णौ **५३ हृक्रोरन्यतरस्याम् । (३)**

(कर्तृसंज्ञा—)

**५४ स्वतन्त्रः कर्ता ।** कर्ता ५५

---

१—(वा०) वसेरश्यर्थस्य प्रतिषेधः ।

२—(वा०) (क) अश्खिादिनीवहीनां प्रतिषेधः । (ख) वहेरनियन्तृकर्तृकस्य । (ग) भक्षेरहिंसार्थस्य (घ) दृशेश्च ।

३—(वा०) अभिवादिदृशोरात्मनेपद उपसंख्यानम् ।

| | | | |
|---|---|---|---|
| कर्ता | **५५ तत्प्रयोजको हेतुश्च ।** | | |
| | (निपातसंज्ञा—) | | |
| निपाताः | **५६ प्राग्रीश्वरान्निपाताः ।** | | निपाताः ६७ |
| | **५७ चादयोऽसत्त्वे ।** | (१) | असत्वे ५८ |
| | (उपसर्गसंज्ञा—) | | |
| निपाताः, | **५८-५९ प्रादयः उपसर्गाः क्रियायोगे ।** | (२) | प्रादयः ६०, क्रियायोगे ७९ |

---

१—(गणपा०) च, वा, ह, अह, एव, एवम्, नूनम्, शश्वत्, युगपत्, भूयस्, सूपत्, कूपत्, कुवित्, नेत्, चेत्, चण, कच्चित्, यत्र, तत्र, नह, हन्त, माकिम, माकीम्, माकिर, नकिम, नकीम, नकिर्, आकीम्, माङ् (मा), नञ् (न), तावत्, यावत्, त्वा, त्वे (त्वै, द्वै), रै, रे, श्रौषट्, वौषट्, वषट्, स्वाहा, स्वधा, ओ३म, तथा, तथाहि, खलु, किल, अथ, सु, सुष्ठु, स्म, अ, इ, उ, ऋ, लृ, ए, ऐ, ओ, औ, दह, उञ्, उकञ्, वेलायाम्, मात्रायाम्, यथा, यत्, तत्, किम, पुरा, वधा (वध्वा), धिक्, हाहा, हेहै, (हहे) पाट्, प्याट्, आहो, उताहो, हो, अहो, नो (नौ), अथो, ननु, मन्ये, मिथ्या, असि, ब्रूहि, तु, नु, इति, इव, वत्, वात्, वन, (चन, का०), सनुकम्, छम्बट्, (छंवट्, छंवट) शंके, शुकम्, खम्, सनात्, सनुतर्, नहिकम्, सत्यम्, ऋतम्, अद्धा, इद्धा, नोचेत्, नचेत्, नहि, जातु, कथम्, कुतः, कुत्र, अव, अनु, हा, हे, है (हे है, का०) आहोस्वित्, शम्, कम्, दिष्टचा, पशु, वट, सह, अनुसट्, आनुषक्, अङ्ग, फट्, ताजक्, (माजक्) अये, अरे, चाटु (चटु, का०) कुम्, खुम्, घुम्, अम्, ईम्, (आईम्, अम्, ईम् का०,) सीम्, सिम्, सि, वै, उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः। आकृतिगणोऽयम, इति चादयः। (तथा अस्मि, तक, यम, थाट्, तुम्, आम्, इह, अनुकम्, सुकम्, सुधा, हाहौ, हैहा, ईहा, ताजक्, बाट्, वाट्, हुम, शीम्, वाकिर्, आङ् (आ) अ, मा (माङ्), नो, ना प्रतिषेधे, उत, तुवै, न्वै, नुवै, अध, अधस्, स्मि, अच्छ, अदल्, हेहे, हंहैं, म, आस, शस्, वव, डिकम्, हिनुक्, श्वकम्, नुकम्, अन्त, द्यौ, सुक्, अले, कीम्) कोष्ठान्तर्गताः तथा इत्यारभ्य वोर्थालिगसंगृहीते गणपाठे दृश्यन्ते।

२—(गणपा०) प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, (आ) नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप, । एते प्रादयः। (बा०) मरुच्छब्दस्योपसंख्यानम् । (ख) श्रच्छब्दस्योपसंख्यानम् ।

(गतिसंज्ञा)—

| | | | |
|---|---|---|---|
| प्रादयः, क्रिया०, | ६० गतिश्च । | (१) | गतिः ७६ |
| गतिः, क्रिया०, | ६१ ऊर्यादिच्विडाचश्च । | (२) | |
| " " | ६२ अनुकरणं चानितिपरम् । | | |
| " " | ६३ आदरानादरयोः सदसती । | | |
| " " | ६४ भूषणेऽलम् । | | |
| " " | ६५ अन्तरपरिग्रहे । | (३) | |
| " " | ६६ कणेमनसी श्रद्धाप्रतीघाते । | | |
| " " | ६७ पुरोऽव्ययम् । | | अव्ययम् ६६ |
| अव्ययम् गतिः | ६८ अस्तं च । | | |
| " " | ६६ अच्छ गत्यर्थवदेषु । | | |
| " | ७० अदोऽनुपदेशे । | | |
| " | ७१ तिरोऽन्तर्धौ । | | तिरोऽन्तर्धौ ७२ |
| तिरःअन्तर्धौ " | ७२ विभाषा कृञि । | | विभाषा ७६, कृञि ७६ |
| विभाषा कृञि, गतिः | ७३ उपाजेऽन्वाजे । | | |

---

१—(वा०) (क) (क) कारिकाशब्दस्योपसंख्यानम् (ख) पुनश्चनसौ छन्दसि (ग) गत्युपसर्गसंज्ञकाः क्रियायोगे यत्क्रियायुक्तास्तं प्रतीतिवचनम् (घ) सुदुरोः प्रतिजेधो नुम्विधितत्त्वषत्वणत्वेषु

२—(गणपा०) ऊरी उररी, (अंगीकारे विस्तारे च का०) तन्थी, ताली, आताली, वेताली, धूली, धूसी, शकला, संशकला, ध्वंसकला, भ्रंसकला (भ्रंशकला का०) गुलगुधा, सजुष् (सजूः) फल (फलूका) फली, बिक्ली, आक्ली, आलोष्टी, केवाली, केवासी, सेवासी (पर्याली) शेवाली, वर्षाली, अत्यूमशा, वश्मसा, मस्मसा मसमसा, औषट्, (श्रौषट्) वौषट्, वषट्, स्वाहा, स्वधा, वन्धा, प्रादुस्, श्रत् (श्रत्) आविस्, कराली, इत्यूर्यादयः।

३—(वा०) अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्।

| | | |
|---|---|---|
| विभाषा,कृञि,गतिः | ७४ साक्षात्प्रभृतीनि च । (१) | |
| " " | ७५ अनत्याधान उरसिमनसी । | |
| " " | ७६ मध्ये-पदे-निवचने च । | |
| कृञि, गतिः | ७७ नित्यं हस्ते-पाणावुपयमने । | |
| " " | ७८ प्राध्वं बन्धने । | |
| " " | ७९ जीविकोपनिषदावौपम्ये । | |
| | (गत्युपसर्गाणां स्थाननिर्देश--) | |
| | ८० ते प्राग्धातोः । | ते, धातोः ८२ |
| ते, धातोः | ८१ छन्दसि परेऽपि (२) | छन्दसि ८२ |
| " " छ० | ८२ व्यवहिताश्च । | |
| | (कर्मप्रवचनीयसंज्ञा--) | |
| | ८३ कर्मप्रवचनीयाः । | कर्म--याः ९८ |
| कर्म--नीयः | ८४ अनुर्लक्षणे । | अनुः ८६ |
| अनुः, कर्म० | ८५ तृतीयार्थे । | |
| अनुः, कर्म० | ८६ हीने । | हीने ८७ |
| अनुः, कर्म० | ८७ उपोऽधिके च । | |
| कर्म० | ८८ अपपरी वर्जने । | |
| " | ८९ आङ् मर्यादावचने । | |
| " | ९० लक्षणेत्थंभूताख्यान-भाग-वीप्सासु प्रति-पर्यनवः । | ल--सु ९१ |
| " ल--यु | ९१ अभिरभागे । | |

---

१--(वा०) साक्षात्प्रभृतिषु च्व्यर्थवचनम् ।

२--एतत्सूत्रद्वयं विकृतं वार्तिकम् । भाष्ये 'छन्दसि परव्यवहितवचनञ्च' इति वार्तिक पाठदर्शनात् । परमिदानीं सूत्रत्वेन दृश्यमानत्वादस्माभिः सूत्रत्वेन संगृहीतम् ।

| | | |
|---|---|---|
| कर्म० | ९२ प्रतिः प्रतिनिधि-प्रतिदानयोः । | |
| ,, | ९३ अधिपरी अनर्थकौ । | |
| ,, | ९४ सुः पूजायाम् । | पू–म् ९५ |
| ,, , पू० म् | ९५ अतिरतिक्रमणे च । | |
| कर्म० | ९६ अपिः पदार्थ-संभावनान्ववसर्ग-गर्हा-समुच्चयेषु । | |
| ,, | ९७ अधिरीश्वरे । | अधिः ९८ |
| ,, , अधिः | ९८ विभाषा कृञि । | |
| | (परस्मैपदसंज्ञा––) | |
| | ९९ लः परस्मैपदम् । | |
| | (आत्मनेपदसंज्ञा––) | |
| | १०० तङानावात्मनेपदम् । | |
| | (तिङ् विभाग––) | |
| | १०१ तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः । | त्रीणि त्रीणि १०३ |
| त्रीणि त्रीणि | १०२ तान्येकवचन-द्विवचन-बहुवचनान्येकशः । | एकव–कशः १०३ |
| | (सुब्विभाग––) | |
| एक–शः | १०३ सुपः । | सुपः १०४ |
| सुपः, | १०४ विभक्तिश्च । | |
| | (पुरुषसंज्ञा––) | |
| | १०५ युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः । | उ–दे, स–णे, स्था-नि० १०८, मध्यमः १०६ |
| उ–दे, स–णे, स्था–मध्यमः | १०६ प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च । | |

स-णे, स्था-पि　१०७ अस्मद्युत्तमः ।

स-णे, स्था-पि　१०८ शेषे प्रथमः ।

(संहितासंज्ञा—)

१०९ परः सन्निकर्षः संहिता ।

(अवसानसंज्ञा—)

११० विरामोऽवसानम् ।

इति प्रथमाध्यायस्य चतुर्थः पादः ।

इति प्रथमोऽध्यायः ।

# अथ द्वितीयोऽध्यायः

## प्रथमः पादः

(समर्थपरिभाषा—)

१ समर्थः पदविधिः ।

(पराङ्गवद्भावातिदेश—)

२ सुबामन्त्रिते पराङ्गवत्स्वरे ।(१) सुप् २।२।३८

(समासाधिकार—)

३ प्राक् कडारात्समासः । समासः २।२।३८

४ सह सुपा । (२) सह सुपा २।२।३८

---

[१] अधिकारसूत्राणां प्रायशोऽनुवृत्तिर्न दर्शिता सुज्ञेयत्वात्

१—(वा०) (क) आमन्त्रितस्य पराङ्गवद्भावे षष्ठ्यामन्त्रितकारकवचनम् । (ख) सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्यानमनन्तरत्वात् । (ग) परमपि छन्दसि । (घ) अव्ययप्रतिषेधश्च । (ङ) अनव्ययीभावस्य ।

२—(वा०) इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च ।

(अव्ययीभावसमाससंज्ञा—)

| | | |
|---|---|---|
| | ५ अव्ययीभावः । | अव्ययीभावः २१ |
| सुपा सह, समस्यते | ६ अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावात्ययासंप्रति-शब्दप्रादुर्भाव-पश्चाद्यथानुपूर्व्ययौगपद्य-सादृश्य-संपत्ति-साकल्यान्तवचनेषु । | अव्ययम् २१ |
| ,, | ७ यथाऽसादृश्ये । | |
| ,, | ८ यावदवधारणे । | |
| ,, | ९ सुप् प्रतिना मात्रार्थे । | |
| समस्यन्ते | १० अक्ष-शलाका-संख्याः परिणा । | |
| ,, | ११-१२ विभाषाऽपपरिबहिरञ्चवः पञ्चम्या । | विभाषा २।२।३८ पंचम्या १३ |
| पञ्चम्या | १३ आङ् मर्यादाभिविध्योः । | |
| | १४ लक्षणेनाभिप्रती आभिमुख्ये । | लक्षणेन १६ |
| लक्षणेन | १५ अनुर्यत्समया । | अनुः १६ |
| अनुः, लक्षणेन, | १६ यस्य चायामः । | |
| | १७ तिष्ठद्गुप्रभृतीनि च । (१) | |
| | १८ पारेमध्ये षष्ठ्या वा । | |

---

१—(गणपा०) तिष्ठद्गु, वहद्गु, आयतीगवम्, खलेयवम्, खलेबुसम् लूनयवम्, लूयमानयवम्, पूतयवम्, पूयमानयवम्, संहृतयवम्, संह्रियमाणयवम्, संहृतबुसम्, संह्रियमाणबुसम्, समभूमि, समपदाति, सुषमम्, विषमम्, दुःषमम्, निःषमम् अपसमम्, आयतीसमम्, (प्रोढम) पापसमम्, पुण्यसमम्, प्राह्णम्, प्ररथम्, प्रमृगम्, प्रदक्षिणम्, (अपरदक्षिणम्) संप्रति, असंप्रति, इच् प्रत्ययः, समासान्तः। (इच् कर्मव्यतिहारे) इति तिष्ठद्गुप्रभृतयः।

| | | |
|---|---|---|
| | १९ संख्या वंश्येन । | संख्या २० |
| संख्या | २० नदीभिश्च । (१) | नदीभिः २१ |
| नदीभिः | २१ अन्यपदार्थे च संज्ञायाम् । | |
| | (तत्पुरुषसमास—) | |
| | २२ तत्पुरुषः । | तत्पुरुषः २।२।२२ |
| तत्पुरुषः | २३ द्विगुश्च । | |
| | २४ द्वितीया श्रितातीत-पतित-गतात्यस्त-प्राप्तापन्नैः । (२) | द्वितीया २९ |
| | २५ स्वयं क्तेन । | क्तेन २८ |
| द्वितीया, क्तेन | २६ खट्वा क्षेपे । | |
| क्तेन | २७ सामि । | |
| द्वितीया, क्तेन | २८ कालाः । | कालाः २९ |
| द्वितीया, कालाः | २९ अत्यन्तसंयोगे च । | |
| | ३० तृतीया तत्कृतार्थेन गुणवचनेन । | तृतीया ३५ |
| तृतीया | ३१ पूर्वसदृश-समोनार्थ-कलह-निपुण-मिश्र-श्लक्ष्णैः । (३) | |
| तृतीया, क-णे कर्तृकरणे | ३२ कर्तृकरणे कृता बहुलम् । | कर्तृकरणे |
| ,, | ३३ कृत्यैरधिकार्थवचने । (४) | |
| ,, | ३४ अन्नेन व्यञ्जनम् । | |

---

१—(वा०) नदीभिः संख्यायाः समाहारेऽव्ययीभावो वक्तव्यः ।
२—(वा०) श्रितादिषु गमिगाम्यादीनामुपसंख्यानम् ।
३—(वा०) पूर्वादिष्ववरस्योपसंख्यानम् ।
४—(वा०) कृत्यग्रहणे यण्ण्यतोर्ग्रहणम् ।

तृतीया, क-णे ३५ भक्ष्येण मिश्रीकरणम् ।

३६ चतुर्थी तदर्थार्थ-बलि-हित-सुख-रक्षितैः । (१)

३७ पञ्चमी भयेन । (२) पंचमी ३९

पञ्चमी ३८ अपेतापोढ-मुक्त-पतितापत्रस्तैरल्पशः ।

,, ३९ स्तोकान्तिक-दूरार्थ-कृच्छ्राणि क्तेन । (३)

४० सप्तमी शौण्डैः । सप्तमी ४८

सप्तमी ४१ सिद्ध-शुष्क-पक्व-बन्धैश्च ।

,, ४२ ध्वाङ्क्षेण क्षेपे । (४)

,, ४३ कृत्यैर्ऋणे (५)

,, ४४ संज्ञायाम् ।

,, ४५ क्तेनाहोरात्रावयवाः । क्तेन ४७

,, क्तेन ४६ तत्र ।

,, ,, ४७ क्षेपे । क्षेपे ४८

---

१—(वा०) अर्थेन नित्यसमासो सर्वलिङ्गता च वक्तव्या ।

२—(वा०) भयभीतभीतिभीभिरिति वक्तव्यम् ।

३—(वा०) शतसहस्रौ परेणेति वक्तव्यम् ।

४—(वा०) ध्वांक्षेणेत्यर्थग्रहणम् ।

५—(वा०) कृत्यैर्नियोगे यद्ग्रहणम् ।

सप्तमी, क्षेपे ४८ पात्रेसँमितादयश्च । (१)

(तत्पुरुषान्तर्गतकर्मधारयसमास—)

४९ पूर्वकालैक-सर्व-जरत्पुराण-नव-केवलाः समानाधिकरणेन । समानाधिकरणेन ७२

समानाधिकरणेन, ५० दिक्संख्ये संज्ञायाम् । दिक्संख्ये ५१

„ ५१ तद्धितार्थोत्तरपदसमाहारे च ।

„ ५२ संख्यापूर्वो द्विगुः ।

„ ५३ कुत्सितानि कुत्सनैः ।

„ ५४ पापाणके कुत्सितैः ।

„ ५५ उपमानानि सामान्यवचनैः ।

„ ५६ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे । (२)

„ ५७ विशेषणं विशेष्येण बहुलम् ।

„ ५८ पूर्वापर-प्रथम-चरम-जघन्य-समान-मध्य-मध्यम-वीराश्च ।

---

१—(गणपा०) पात्रेसमिताः, पात्रेबहुलाः, उदुम्बरमशकाः, उदुम्बरकृमिः (उदरक्रिमिः का०) कूपकच्छपः, अवटकच्छपः, कूपमण्डूकः, कुम्भमण्डूकः, उदपानमण्डूकः, नगरकाकः, नगरवायसः, मातरिपुरुषः, पिण्डीशूरः, पितरिशूरः, गेहेशूरः, गेहेनर्दी, गेहेक्ष्वेडी, गेहेविजिती, गेहेव्याडः, गेहेमेही, (गेहेदाही), गेहेदृप्तः, (गेहेतृप्तः का०) गेहेधृष्टः, गर्भेतृप्तः, आखनिकबकः, गोष्ठेशूरः, गोष्ठेविजिती, गोष्ठेक्ष्वेडी, गोष्ठेपटुः, गोष्ठेपण्डितः, गोष्ठेप्रगल्भः, कर्णेटिरिटिरा, (कर्णेटिट्टिभः का०) कर्णेचुरुचुरा, (कर्णेचुरचुरा का०) कूपचूर्णकः, आकृतिगणोऽयम् । इति पात्रेसमितादिः ।

* 'सम्मितादयश्च' इति पाठान्तरम् ।

२—(गणपा०) व्याघ्र, सिंह, ऋक्ष, ऋषभ, चन्दन, वृक, (वृक्ष का०) वृष, वराह, हस्तिन, तरु, कुञ्जर, रुरु, पृषत्, (पृषत का०) पुण्डरीक, पलाश, कितव, बलाहक, (का०), आकृतिगणोऽयम् । तेन मुखपद्मम्, मुखकमलम्, करकिसलयं, पार्थिवचन्द्रः । इति व्याघ्रादिः ।

समानाधिकरणेन ५९ श्रेण्यादयः कृतादिभिः। (१)

,, ६० क्तेन नञ्विशिष्टेनानञ्। (२)

,, ६१ सन्महत्-परमोत्तमोत्कृष्टाः पूज्यमानैः।

,, ६२ वृन्दारक-नाग-कुञ्जरैः पूज्यमानम्।

,, ६३ कतरकतमौ जातिपरिप्रश्ने।

,, ६४ किं क्षेपे।

,, ६५ पोटा-युवति-स्तोक-कतिपय-गृष्टि-धेनु-वशा-वेहद्बष्कयणी प्रवक्तृ-श्रोत्रियाध्यापक-धूर्तैर्जातिः। जातिः ६६

जातिः ,, ६६ प्रशंसावचनैश्च।

,, ६७ युवा खलति-पलित-वलिन-जरतीभिः।

,, ६८ कृत्यतुल्याख्या अजात्या।

---

१—(गणपा०) श्रेणि, ऊक, (एक का०) पूग, कुन्दुम, (मुकुन्द, कुन्द का०) राशि, निचय, (विशेष) निधन, (निधान का०) पर, इन्द्र, देव, मुण्ड भूत, श्रवण, वदान्य, अध्यापक, अभिरूपक, ब्राह्मण, क्षत्रिय, विशिष्ट (विशिख का०) पटु, पण्डित, कुशल, चपल, निपुण, कृपण, इति श्रेण्यादिः।

(वा०) श्रेण्यादिषु च्व्यर्थवचनम्।

(गणपा०) कृत, मित, मत, भूत, उक्त, युक्त, समाज्ञात, समाम्नात, समाख्यात, सम्भावित, संसेवित, अवधारित, अवकल्पित, निराकृत, उपकृत, उपाकृत, दृष्ट, कलित, दलित, उदाहृत, विश्रुत, उदित, आकृतिगणः। इति कृतादिः।

२—(वा०) कृतापकृतादीनामुपसंख्यानं कर्तव्यम्।

समानाधिकरणेन　६९ वर्णो वर्णेन । (१)

,,　७० कुमारः श्रमणादिभिः । (२)

,,　७१ चतुष्पादो गर्भिण्या । (३)

,,　७२ मयूरव्यंसकादयश्च । (४)

इति द्वितीयाध्यायस्य प्रथमः पादः

---

१—(वा०) समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च ।

२—(गणपा०) श्रमणा, प्रव्रजिता, कुलटा, गर्भिणी, तापसी, दासी, बन्धकी, अध्यापक, अभिरूपक, पटु, मृदु, पण्डित, कुशल, चपल, निपुण । इति श्रमणादिः ।

३—(वा०) चतुष्पाज्जातिरिति वक्तव्यम् ।

४—(गणपा०) मयूरव्यंसक, छात्रव्यंसक, कम्बोजमुण्ड (काम्बोजमुण्ड का०) यवनमुण्ड, छन्दसि हस्तेगृह्य, (हस्तगृह्य), पादेगृह्य (पादगृह्य) लाङ्गूलगृह्य (लाङ्गुलेगृह्य, लाङ्गलेगृह्य का०) पुनर्दाय, एहीडादयोऽन्यपदार्थे । एहीडं वर्तते, एहीयवं वर्तते, एहिवाणिजा क्रिया, अपेहिवाणिजा, प्रेहिवाणिजा, एहिस्वागता, अपेहिस्वागता, एहिद्वितीया, अपेहि द्वितीया, प्रेहिद्वितीया, एहिकटा, अपेहिकटा (अपोहकटा का०) प्रेहिकटा (प्रोहकटा का०) आहरकरटा, प्रेहिकर्दमा, प्रोहकर्दमा, विधमचूडा, उद्धरचूडा (उद्धमचूडा), आहरचेला, आहरवासना, आहरसेना, आहरविनता, (आहरवनिता), कृन्तविचक्षणा, उद्धरोत्सृजा, उद्धरावसृजा, उद्धमविधमा, उत्पचनिपचा (उत्पचविपचा का०) उत्पतनिपता, उच्चावचम्, उच्चनीचम्, आचोपचम्, आचपराचम्, नखप्रचम्, निश्चप्रचम्, अकिंचन, स्नात्वाकालक, पीत्वास्थिरक, भुक्त्वासुहित, प्रोष्यपापीयान्, उत्पत्यपाकला, (उत्पत्यव्याकुला का०) निपत्य रोहिणी, निषण्णश्यामा, अपेहिप्रघसा, एहिविघसा, इहपंचमी, इहद्वितीया, जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति । (उज्जहि जहिजोडम् (जहिजोडः का०) जहिस्तम्बम्, (जहिस्तम्बः का०) उज्जहिस्तम्बम्, स्तम्बः का०) आख्यातमाख्यातेन क्रियासातत्ये । अश्नीतपिबता, पचतभृज्जता, खादतमोदता, खादताचमता (खादतवमता) आहरनिवपा, आवपनिष्किरा (आहरनिष्किरा), उत्पचविपचा, भिन्धिलवणा, कृन्धिविचक्षणा (छिन्धिवि० का०) पचलवणा, पचप्रकूटा, प्रेहिस्वागता, अपोहकर्दमा, अचितोपचितम्, अवचितपराचितम्, उज्जहिजोडः । आकृतिगणः । तेन—अकुतोभयः, कान्दिशीकः, आहोपुरुषिका, अहमहमिका, यदृच्छा, एहिरेयाहिरा, उन्मृजावमृजा, द्रव्यान्तरम्, अवश्यकार्यम्, इति मयूरव्यंसकादिः ।

# अथ द्वितीयः पादः

(तत्पुरुषसमास—)

| | | | |
|---|---|---|---|
| | १ पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे । | | एकदे-णे ३ |
| एकदे-णे | २ अर्धं नपुंसकम् । | | |
| एकदे-णे | ३ द्वितीय-तृतीय-चतुर्थ-तुर्याण्यन्यतरस्याम् । | | |
| | ४ प्राप्तापन्ने च द्वितीयया । | | |
| | ५ कालाः परिमाणिना । | | |
| सुपा | ६ नञ् । | (१) | |
| ,, | ७ ईषदकृता | (२) | |
| ,, | ८ षष्ठी । | (३) | षष्ठी १७ |
| षष्ठी | ९ याजकादिभिश्च । | | |
| षष्ठी | १० न निर्धारणे । (४) | | न १६ |
| षष्ठी, न | ११ पूरण-गुण-सुहितार्थ-सदव्यय-तव्य-समानाधिकरणेन । | | |
| षष्ठी, न | १२ क्तेन च पूजायाम् । | | क्तेन १३ |
| क्तेन, षष्ठी, न | १३ अधिकरणवाचिना च । | | |

---

१—(वा०) नञो नलोपस्तिङि क्षेपे ।*

२—(वा०) ईषद्गुणवचनेनेति वक्तव्यम् ।

३—(वा०) (क) कृद्योगा च षष्ठी समस्यत इति वक्तव्यम् । (ख) तत्स्थैश्च गुणैः षष्ठी समस्यत इति वक्तव्यम् । (ग) न तु तद्विशेषणैः । (घ) गुणात्तरेण तरलोपश्चेति वक्तव्यम् ।*

४—(वा०) प्रतिपदविधाना च षष्ठी न समस्यत इति वक्तव्यम् ।

---

* इदं वार्तिकमस्मिन् सूत्रे, भाष्ये न दृश्यते ।

| | | |
|---|---|---|
| षष्ठी, न | १४ कर्मणि च । | |
| ,, ,, | १५ तृजकाभ्यां कर्तरि । | तृजकाभ्याम् १७ |
| तृजकाभ्यां, षष्ठी, न | १६ कर्तरि च । | |
| तृ-भ्याम, षष्ठी | १७ नित्यं क्रीडाजीविकयोः । | नित्यम् १९ |
| नित्यम् | १८ कु-गति-प्रादयः । (१) | |
| ,, | १९ उपपदमतिङ् । | उपपदम् २१ |
| उपपदम् | २० अमैवाव्ययेन । | अमैव, अ-न २१ |
| उपपदम्, अमैव अ-न | २१ तृतीयाप्रभृतीन्यन्यतरस्याम् । | तृतीया प्रभृतीनि २२ |
| तृतीयाप्रभृतीनि, | २२ क्त्वा च । | |
| | (बहुव्रीहिसमास—) | |
| | २३ शेषो बहुव्रीहिः । | बहुव्रीहिः २८ |
| बहुव्रीहिः | २४ अनेकमन्यपदार्थे । (२) | अनेकम् २९ |
| ,, | २५ संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये । | |
| ,, | २६ दिङ्नामान्यन्तराले । | |
| ,, | २७ तत्र तेनेदमिति सरूपे । | |
| बहुव्रीहिः | २८ तेन सहेति तुल्ययोगे । | |

---

१—(वा०) (क) स्वती पूजायाम् (सौनाग)। (ख) दुर्निन्दायाम् (सौनाग)। (ग) आङीषदर्थे (सौनाग)। (घ) कुः पापार्थे (सौनाग)। (ङ) प्रादयो गताद्यर्थे प्रथमया। (च) अत्यादयः क्रान्ताद्यर्थे द्वितीयया। (छ) अवादयः क्रुष्टाद्यर्थे तृतीयया। (ज) पर्यादयो ग्लानाद्यर्थे चतुर्थ्या (झ), निरादयः क्रान्ताद्यर्थे पंचम्या। (ञ) अव्ययं प्रवृद्धादिभिः।

२—(वा०) (क) बहुव्रीहिः समानाधिकरणानाम्। (ख) अव्ययानाम् च बहुव्रीहिर्वक्तव्यः। (ग) सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च। (घ) समुदायविकारषष्ठ्याश्च। (ङ) प्रादिभ्यो धातुजस्य वा। (च) नञोऽस्त्यर्थनाम्। (छ) सुबधिकारेऽस्तिक्षीरादीनाम्।

| | | |
|---|---|---|
| | (द्वन्द्वसमास—) | |
| अनेकम् | २९ चार्थे द्वन्द्वः । | |
| | (पूर्वनिपात—) | |
| | ३० उपसर्जनं पूर्वम् । | पूर्वम् ३८ उप-सर्जन ३१ |
| उपसर्जनम् | ३१ राजदन्तादिषु परम् । (१) | |
| पूर्वम् | ३२ द्वन्द्वे घि । | द्वन्द्वे ३४ |
| द्वन्द्वे, पूर्वम् | ३३ अजाद्यदन्तम् । (२) | |
| ” ” | ३४ अल्पाच्तरम् । (३) | |
| पूर्वम् | ३५ सप्तमी-विशेषणे बहुव्रीहौ । (४) | बहुव्रीहौ ३७ |
| बहुव्रीहौ, पूर्वम् | ३६ निष्ठा । (५) | |

---

१—(गणपा०) १ राजदन्तः, अग्रेवणम्, लिप्तवासितम्, नग्नमुषितम्, सिक्तसंमृष्टम्,। मृष्टलुञ्चितम्, अवक्लिन्नपक्वम्, अर्पितोप्तम्, (अर्पितोतम्) उप्तगाढम्, उलूखलमुसलम्, तण्डुलकिण्वम्, दृषदुपलम्, आरग्वायनबन्धकी, चित्ररथ-वाल्हीकम्, (चित्ररथबाह्लीकम् का०) अवन्त्यश्मकम् (आव० का०) शूद्रार्यम्, स्नातकराजानौ, विश्वक्सेनार्जुनौ, अक्षिभ्रुवम्, दारगवम्, शब्दार्थौ, कामार्थौ (धर्मार्थौ), अर्थशब्दौ, अर्थधर्मौ, अर्थकामौ, वैकारिमतम्, गोजवाजम्, (गाज-वाजम्, गजवाजम् का०) गोपालधानीपूलासम्, पूलासककुरण्डम् (पूलासकारण्डम्, पूलासककरण्डम् का०) स्थूलासम् (स्थूलपूलासम्), उशीरबीजम्, जिज्ञास्थि, सिञ्जाश्वत्थम् (सिञ्जास्थम् का०) चित्रास्वाती, भार्यापती, दंपती, जायापती, पुत्रपती, पुत्रपशू (पुत्रपशु का०) केशश्मश्रु (श्मश्रुकेशौ) शिरोबीजम्, शिरोजानु, सर्पिर्मधुनी, मधुसर्पिषी, आद्यन्तौ, अन्तादी, गुणवृद्धी, वृद्धिगुणौ। इति राजदन्तादिः।

२—(वा०) (क) बहुष्वनियमः। (ख) द्वन्द्वे ध्यजाद्यदन्तं विप्रतिषेधेन।

३—(वा०) (क) अनेकप्राप्तावेकस्य नियमोऽनियमः शेषेषु। (ख) ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणाम्। (ग) अभ्यर्हितम्। (घ) लघ्वक्षरम्। (ङ) वर्णानामानुपूर्व्येण। (च) भ्रातुश्च ज्यायसः। (छ) संख्याया अल्पीयस्याः। (ज) धर्मादिषूभयम्।

४—(वा०) (क) बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानम्। (ख) वा प्रियस्य। (ग) सप्तम्याः पूर्वनिपाते गड्वादिभ्यः परवचनम्।

५—(वा०) (क) निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम्। (ख) प्रहरणार्थेभ्यश्च।

निष्ठा, पूर्वम् ३७ वाहिताग्न्यादिषु । (१) वा ३८

वा, पूर्वम् ३८ कडाराः कर्मधारये । (२)

इति द्वितीयः पादः ।

## अथ तृतीयः पादः

(विभक्तिविधान--)

१ अनभिहिते ।

(द्वितीयाविभक्ति)—

२ कर्मणि द्वितीया । (३) द्वितीया ५ कर्मणि ३

द्वितीया ३ तृतीया च होश्छन्दसि ।

" ४ अन्तरान्तरेण युक्ते ।

" ५ कालाध्वनोरत्यन्तसंयोगे । कालाध्वनोः ७ अत्यंत संयोगे ६

कालाध्वनोरत्यन्तसंयोगे ६ अपवर्गे तृतीया ।

कालाध्वनोः ७ सप्तमी-पञ्चम्यौ कारकमध्ये ।

८ कर्मप्रवचनीययुक्ते द्वितीया । कर्मप्रवचनीय-युक्ते ११

कर्म-युक्ते ९ यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ।

---

१—(गणपा०) आहिताग्नि, जातपुत्र, जातदन्त, जातश्मश्रु, तैलपीत, घृतपीत, मद्यपीत, ऊढभार्य, गतार्थ। आकृतिगणोऽयम्। तेन गडगण्ड, अस्युद्यत (अरमुद्यत, दण्डपाणिप्रभृतयोऽपि) इत्याहिताग्निः।

२—(गणपा०) कडार, गडुल, खञ्ज, (खञ्जर का०) खोड, काण, कुण्ठ खलति, गौर, वृद्ध, भिक्षुक, पिंग, पिङ्गुल, (पिङ्गल) तनु, (तनुतड) जठर, बधिर, मटर, कञ्ज, बर्बर, वटर, । इति कडारादिः।

३—(वा०) अभितःपरितःसमयानिकषाहाप्रतियोगेषूपसंख्यानम् ।

कर्म-युक्ते　१० पञ्चम्यपाङ्परिभिः ।　पञ्चमी ११

क-क्ते पञ्चमी　११ प्रतिनिधि-प्रतिदाने च यस्मात् ।

१२ गत्यर्थकर्मणि द्वितीया-चतुर्थ्यौ
चेष्टायामनध्वनि । (१)

(चतुर्थी--)

१३ चतुर्थी सम्प्रदाने । (२)　चतुर्थी १७

चतुर्थी　१४ क्रियार्थोपपदस्य च कर्मणि
स्थानिनः ।

,,　१५ तुमर्थाच्च भाववचनात् ।

,,　१६ नमः-स्वस्ति-स्वाहा-स्वधालं-
वषड्योगाच्च । (३)

,,　१७ मन्यकर्मण्यनादरे विभाषाऽ
प्राणिषु । (४)

(तृतीयाविभक्ति—)

१८ कर्तृ-करणयोस्तृतीया । (५)　तृतीया २३

तृतीया　१९ सहयुक्तेऽप्रधाने ।

,,　२० येनाङ्गविकारः ।

,,　२१ इत्थम्भूतलक्षणे ।

,,　२२ संज्ञोऽन्यतरस्यां कर्मणि ।　हेतौ २७

,,　२३ हेतौ । (६)

---

१—(वा०) (क) अध्वन्यर्थग्रहणम् । (ख) आस्थितप्रतिषेधश्च ।

२—(वा०) (क) चतुर्थीविधाने तादर्थ्य उपसंख्यानम् । (ख) क्लृपि-सम्पद्यमाने । (ग) उत्पातेन ज्ञाप्यमाने । (घ) हितयोगे चतुर्थी वक्तव्या ।

३—(वा०) अलमिति पर्याप्त्यर्थग्रहणं कर्तव्यम् ।

४—(वा०) अनावादिष्विति वक्तव्यम् ।

५—(वा०) प्रकृत्यादिभ्य उपसंख्यानम् ।

६—(वा०) निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम् ।

| | | |
|---|---|---|
| हेतौ | २४ अकर्तर्यृणे पञ्चमी । | पंचमी २५ |
| पंचमी, हेतौ | २५ विभाषा गुणेऽस्त्रियाम् । | |
| हेतौ | २६ षष्ठी हेतुप्रयोगे । | षष्ठी, हेतु-प्रयोगे २७ |
| षष्ठी हेतुप्रयोगे हेतौ | २७ सर्वनाम्नस्तृतीया च । | |
| | (पंचमीविभक्ति) — | |
| | २८ अपादाने पञ्चमी (१) | पंचमी ३५ |
| पञ्चमी | २९ अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते । | |
| | ३० षष्ठ्यतसर्थप्रत्ययेन । | |
| | ३१ एनपा द्वितीया । | |
| पञ्चमी | ३२ पृथग्विनानानाभिस्तृतीयान्यतरस्याम् । | तृतीया ३५ अन्यतरस्याम् ३३ |
| तृतीया, पञ्चमी अन्यतरस्याम् | ३३ करणे च स्तोकाल्प-कृच्छ्र-कतिपयस्यासत्त्ववचनस्य । | |
| पञ्चमी | ३४ दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् । | |
| तृतीया, पंचमी | ३५ दूरान्तिकार्थेभ्यो द्वितीया च । | दूरा-र्थेभ्यः ३६ |
| | (सप्तमीविभक्ति) — | |
| दूरान्तिकार्थेभ्यः | ३६ सप्तम्यधिकरणे च । (२) | सप्तमी ४१ |

---

१—(वा०) (क) पंचमीविधाने ल्यब्लोपे कर्मण्युपसंख्यानम् । (ख) अधिकरणे च । (ग) प्रश्नाख्यानयोश्च । (घ) यतश्चाध्वकालनिर्माणम् । (ङ) तद्युक्तात्काले सप्तमी (च) अध्वनः प्रथमा च ।

२—(वा०) (क) सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् । (ख) साध्वसाधुप्रयोगे च । (ग) कारकार्हाणां च कारकत्वे । (घ) अकारकार्हाणां चाकारकत्वे । (ङ) तद्विपर्यासे च । (च) निमित्तात्कर्मसंयोगे ।

| | | |
|---|---|---|
| सप्तमी | ३७ यस्य च भावेन भावलक्षणम् । | यस्य भावे-म् ३८ |
| स-मी यस्य भा-म् | ३८ षष्ठी चानादरे । | षष्ठी ४१ |
| षष्ठी-सप्तम्यौ | ३९ स्वामीश्वराधिपति-दायाद-साक्षि-प्रतिभू-प्रसूतैश्च । | |
| षष्ठीसप्तम्यौ | ४० आयुक्त-कुशलाभ्यां चासेवायाम् । | |
| षष्ठीसप्तम्यौ | ४१ यतश्च निर्धारणम् । | यतः, निर्धारणम् ४२ |
| यतः, निर्धारणम् | ४२ पञ्चमी विभक्ते । | |
| | ४३ साधु-निपुणाभ्यामर्चायां सप्तम्यप्रतेः । | सप्तमी ४५ |
| सप्तमी | ४४ प्रसितोत्सुकाभ्यां तृतीया च । | तृतीया ४५ |
| तृतीयासप्तम्यौ | ४५ नक्षत्रे च लुपि । | |
| | (प्रथमाविभक्ति—) | |
| | ४६ प्रातिपदिकार्थ-लिङ्ग-परिमाण-वचनमात्रे प्रथमा । | प्रथमा ४७ |
| प्रथमा | ४७ संबोधने च । | संबोधने ४८ |
| | (आमन्त्रितसंज्ञा—) | |
| संबोधने | ४८ सामन्त्रितम् । | |
| | (संबुद्धिसंज्ञा--) | |
| संबोधनस्य | ४९ एकवचनं संबुद्धिः । | |
| | (षष्ठीविभक्ति—) | |
| | ५० षष्ठी शेषे । | षष्ठी, शेषे ७३ |
| षष्ठी, शेषे | ५१ ज्ञोऽविदर्थस्य करणे । | |
| षष्ठी, शेषे | ५२ अधीगर्थ-दयेशां कर्मणि । | कर्मणि ६१ |
| षष्ठी, कर्मणि | ५३ कृञः प्रतियत्ने । | |

| | | |
|---|---|---|
| षष्ठी शेषे, | ५४ रुजार्थानां भाववचनानामज्वरेः । (१) | |
| कर्मणि, षष्ठी | ५५ आशिषि नाथः । | |
| कर्मणि, षष्ठी | ५६ जासि-निप्रहण-नाट-क्राथ-पिषां हिंसायाम् । | |
| ", " | ५७ व्यवहृ-पणोः समर्थयोः । | |
| ", " | ५८ दिवस्तदर्थस्य । | दिवस्तदर्थस्य ६१ |
| कर्मणि दि-स्य, ष | ५९ विभाषोपसर्गे । | |
| दिव-स्य, कर्मणि | ६० द्वितीया ब्राह्मणे । | |
| कर्मणि षष्ठी | ६१ प्रेष्य-ब्रुवोर्हविषो देवतासम्प्रदाने । (२) | |
| षष्ठी | ६२ चतुर्थ्यर्थे बहुलं छन्दसि । (३) | छन्दसि, बहुलम् ६३ |
| बहुलं, छन्दसि, षष्ठी | ६३ यजेश्च करणे । | |
| षष्ठी | ६४ कृत्वोर्थप्रयोगे कालेऽधिकरणे । | |
| " | ६५ कर्तृकर्मणोः कृति । | |
| " | ६६ उभयप्राप्तौ कर्मणि । (४) | |
| " | ६७ क्तस्य च वर्तमाने ( ५ | क्तस्य ६८ |
| क्तस्य, षष्ठी | ६८ अधिकरणवाचिनश्च । | |
| षष्ठी | ६९ न लोकाव्यय-निष्ठा-खलर्थ-तृनाम् । (६) | न ७० |

---

१–(वा०) अज्वरिसन्ताप्योरिति वक्तव्यम् ।
२–(वा०) हविषः प्रस्थितस्य प्रतिषेधो वक्तव्यः ।
३–(वा०) षष्ठ्यर्थे चतुर्थी वक्तव्या ।
४–(वा०) (क) अकाकारयोः स्त्रीप्रत्यययोः प्रयोगे नेति वक्तव्यम् । (ख) शेषे विभाषा ।
५–(वा०) (क) नपुंसके भाव उपसंख्यानम् । (ख) शेषविज्ञानात्सिद्धम् ।
६–(वा०) (क) उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः । (ख) अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः । (ख) द्विषः शतुर्वा वचनम् ।

षष्ठी न ७० अकेनोर्भविष्यदाधमर्ण्ययोः ।

" ७१ कृत्यानां कर्तरि वा । (१)

" ७२ तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् ।

" ७३ चतुर्थी चाशिष्यायुष्य-मद्र-भद्र-कुशल-सुखार्थ-हितैः । (२)

इति द्वितीयाध्यायस्य तृतीयः पादः

## अथ चतुर्थः पादः

(एकवद्भाव—)

१ द्विगुरेकवचनम् । एकवचनम् १६

एकवचनम् २ द्वन्द्वश्च प्राणि-तूर्य-सेनाङ्गानाम् । द्वन्द्वः १६

द्वन्द्वः, एक-म् ३ अनुवादे चरणानाम् ।

" " ४ अध्वर्यु-क्रतुरनपुंसकम् ।

" " ५ अध्ययनतोऽविप्रकृष्टाख्यानाम् ।

" " ६ जातिरप्राणिनाम् ।

" " ७ विशिष्टलिङ्गो नदीदेशोऽग्रामाः । (३)

---

१—(वा०) उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्यः ।

२—(वा०) आयुष्यादीनाम् पर्यायग्रहणं कर्तव्यम् ।

३—(वा०) (क) अग्रामा इत्यत्र नगराणां प्रतिषेधो वक्तव्यः (ख) उभयतश्च ग्रामाणां प्रतिषेधो वक्तव्यः ।

| | | |
|---|---|---|
| द्वन्द्वः, एक० | ८ क्षुद्रजन्तवः । | |
| ,, ,, | ९ येषाञ्च विरोधः शाश्वतिकः । | |
| ,, ,, | १० शूद्राणामनिरवसितानाम् । | |
| ,, ,, | ११ गवाश्वप्रभृतीनि च । | |
| ,, ,, | १२ विभाषा वृक्ष-मृग-तृण-धान्य-व्यञ्जन-पशु-शकुन्यश्ववडव-पूर्वापराधरोत्तराणाम् (१) | विभाषा १३ |
| ,, ,, वा | १३ विप्रतिषिद्धञ्चानधिकरणवाचि। | |
| ,, ,, | १४ न दधिपयआदीनि । | न १६ |
| ,, ,, | १५ अधिकरणैतावत्त्वे च । | अ-त्वे १६ |
| ,, ,,अ-त्वे | १६ विभाषा समीपे । | |
| | (समासलिङ्गप्र-, लिङ्गानुशासनप्रकरणंवा—) | |
| | १७ स नपुंसकम् (२) | नपुंसकम् २५ |
| नपुंसकम् | १८ अव्ययीभावश्च ।(३) | |
| ,, | १९ तत्पुरुषोऽनञ्कर्मधारयः । | तत्पुरुषः २५, अन-रयः २५ |
| अ-यः,त-षः,न० | २० संज्ञायां कन्थोशीनरेषु । | |
| ,, ,, ,, | २१ उपज्ञोपक्रमं तदाद्याचिख्यासायाम् । | |
| ,, ,, ,, | २२ छाया बाहुल्ये। | |

---

१—(वा०) बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानाम् ।

२—(वा०) (क) अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते। (ख) वाऽऽबन्तः स्त्रियामिष्टः (ग) अनो नलोपश्च वा द्विगुः स्त्रियाम् (घ) पात्रादिभ्यः प्रतिषेधो वक्तव्यः।

३—(वा०) (क) पुण्यसुदिनाभ्यामन्हः क्लीवतेष्यते। (ख) पथः संख्याव्ययादेः क्लीवतेष्यते। (ग) क्रियाविशेषणानाञ्च क्लीवतेष्यते।

अ-यः, त-षः, न० **२३ सभा राजाऽमनुष्यपूर्वा ।** सभा २४

'' '' ''सभा **२४ अशाला च ।**

'' '' '' **२५ विभाषा सेना-सुरा-छाया-शाला-निशानाम् ।**

**२६ परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः । (१)**

**२७ पूर्ववदश्ववडवौ ।** पूर्ववत् २८

पूर्ववत् **२८ हेमन्त-शिशिरावहोरात्रे च छन्दसि ।**

**२९ रात्रान्हाहाः पुंसि । (२)**

**३० अपथं नपुंसकम् ।**

**३१ अर्धर्चाः पुंसि च । (३)**

---

१—(वा०) द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः।

२—(वा०) अनुवाकादयः पुंसीति वक्तव्यम्।

३—(गणपा०) **अर्धर्च, गोमय, कषाय, कार्षापण, कुतप, कुणप, कपाट, शङ्ख, गूथ, यूथ, ध्वज, कबन्ध, पद्म, गृह, सरक, कंस, दिवस, यूष, अन्धकार, दण्ड, कमण्डलु, मण्ड, भूत, द्वीप, द्यूत, चक्र, धर्म, कर्मन्, मोदक, शतमान, यान, नख, नखर, चरण, पुच्छ, दाडिम, हिम, रजत, सक्तु, पिधान, सार, पात्र, घृत, सैंधव, औषध, आढक, चषक, द्रोण, खलीन, पात्रीव, षष्टिक, वारवाण (वार, वाण, का०) प्रोथ, कपित्थ, शुष्क, शाल, शील, शुल्क, (शुल्ब, शुक्ल का०), सीधु (शीधु) कवच, रेणु, ऋण, कपट, शीकर, (सीकर का०), मुसल, सुवर्ण, वर्ण, पूर्व, (यूप का०), चमस, क्षीर, कर्ष, आकाश, अष्टापद, मंगल, निधन, निर्यास जृम्भ, वृत्त, पुस्त, बुस्त, क्ष्वेडित, भृङ्ग, निगड, खल, मधु, मूल, मूलक, स्थूल, शराव, नाल, (शाल का०) वप्र, विमान, मुख, प्रग्रीव, शूल, वज्र, कटक, कण्टक, कर्पट, शिखर, कल्क (वल्कल), नाट, मस्तक (नटमक), वलय, कुसुम, तृण, पङ्क, कुण्डल, किरीट, कुमुद, अर्बुद, अङ्कुश, तिमिर, आश्रम, भूषण, इष्वास, (इल्कस, इक्कस का०), मुकुल, वसन्त, तडाग (तटाक), पिटक, विटङ्क, विडङ्ग, पिण्याक, माष, कोष, फलक, दिन, दैवत, पिनाक, समर, स्थाणु, अनीक, उपवास, शाक, कर्पास, विशाल, चषाल**

(अन्वादेशे आदेश—)

३२ इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ । इद-शे ३४ अश् ३३

अश्, अ-शे ३३ एतदस्त्रतसोस्त्रतसौ चानुदात्तौ । एतदः ३४

इदमः,एतदः,अ-शे ३४ द्वितीयाटौस्स्वेनः । (१)

(आर्धधातुके धात्वादेश—)

३५ आर्धधातुके । आर्धधातुके ५७

आर्धधातुके ३६ अदो जग्धिर्ल्यप्ति किति । अदः ४०

अदः ३७ लुङ्सनोर्घस्लृ । (२) घस्लृ ४०

अदः, घस्लृ ३८ घञपोश्च ।

" " ३९ बहुलं छन्दसि ।

" " ४० लिट्यन्यतरस्याम् । लिटि, अ-म् ४१

लिटि, अ-म् ४१ वेञो वयिः ।

---

(चखाल), खण्ड, दर, विटप, रण, बल, मक (मल का०), मृणाल, हस्त, आर्द्र, हल, सूत्र, ताण्डव, गाण्डीव, मण्डप, पटह, सौध, योध, पार्श्व, शरीर, फल, छल, पुर, राष्ट्र, बिम्ब, अम्बर, कुक्कुट, कुट्टिम, कुडप, ककुद, खण्डल, तोमर, तोरण, मञ्चक, पञ्चक, पुंख, मध्य, बाल, छाल, वल्मीक (वाल्मीक का०), वर्ष, वस्त्र, वसु, देह, उद्यान, उद्योग, स्नेह, स्तेन, स्तन, स्वर, संगम, निष्क, क्षेम, शूक, क्षत्र, पवित्र, यौवन, कलह, पालक (मालक), मूषिक, मण्डल, वल्कल, कुञ्ज, विहार, लोहित, विषाण, भवन, अरण्य, पुलिन, दृढ, आसन, ऐरावत, शूर्प, तीर्थ, लोमश, तमाल, लोह, दण्डक, शपथ, प्रतिसर, दारु, धनुस्, मान, वर्चस्क, कूर्च, तण्डक, मठ (मव का०), सहस्र, ओदन, प्रवाल, शकट, अपराह्ण, नीड, शकल, तण्डुल, तङ्कु, वितङ्कु, विश्व, छत्र, पानक, भृंखल, मुण्ड, पूत, मरु, लोमन, लिङ्ग, सीर, क्षत, कडार, पूर्ण, पणव, पुस्तक, पल्लव, शार, नाल, प्रवर, पुराण, जाल, स्कन्ध, ललाट, कुङ्कुम, कुशल, कटक, उद्याम इति अर्धर्चादिः ।

१—(वा०) एनदिति नपुंसकैकवचने वक्तव्यम् ।

२—(वा०) घस्लृभावेऽच्युपसंख्यानम् ।

| | | |
|---|---|---|
| | ४२ हनो वध लिङि । | हनः ४३-वध ४४ |
| हनो बध | ४३ लुङि च । | लुङि ४४ |
| हनो बध, लुङि | ४४ आत्मनेपदेष्वन्यतरस्याम् । | |
| | ४५ इणो गा लुङि । (१) | इणः ४७ |
| इणः | ४६ णौ गमिरबोधने । | गमिरबोधने ४७ |
| इणः अ-ने, गमिः | ४७ सनि च । | सनि ४८ |
| सनि, गमिः | ४८ इङश्च । | इङः ५१ |
| इङः | ४९ गाङ् लिटि । | गाङ् लिटि ५१ |
| इङो, गाङ् | ५० विभाषा लुङ्लृङोः । | विभाषा ५१ |
| इङोगाङ् वि-षा | ५१ णौ च संश्चङोः । | |
| आर्धधातुके | ५२ अस्तेर्भूः । | |
| ,, | ५३ ब्रुवो वचिः । | |
| ,, | ५४ चक्षिङः ख्याञ् । (२) | चक्षिङः ख्याञ् ५५ |
| चाक्षिङः ख्याञ् | ५५ वा लिटि । | |
| आर्धधातुके | ५६ अजेर्व्यघञपोः । (३) | अजेर्वी ५७ |
| अजेर्वी | ५७ वा यौ । | |
| | (लुक्प्र०)-- | |
| | ५८ ण्यक्षत्रियार्षञितो यूनि लुगणिञोः । (४) | यूनि ६१ लुक् ८३ |

---

१—(वा०) इण्वदिक इति वक्तव्यम् ।

२—(वा०) (क) ख्शादिरप्ययमादेश इष्यते । (ख) वर्जने प्रतिषेधो वक्तव्यः । (ग) असनयोश्च प्रतिषेधो वक्तव्यः । (घ) बहुलं संज्ञाछन्दसोरिति वक्तव्यम् ।

३—(वा०) (क) घञपोः प्रतिषेधे क्यप उपसंख्यानम् । वलादावार्धधातुके विकल्प इष्यते ।

४—(वा०) अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम् ।*

---

* अणिञोर्लुकि तद्राजाद्युवप्रत्ययस्योपसंख्यानम् इति भाष्यपाठः

५९ पैलादिभ्यश्च । (१)

६० इञः प्राचाम् ।

६१ न तौल्वलिभ्यः । (२)

६२ तद्राजस्य बहुषु तेनैवास्त्रियाम् । बहु-म् ७०

बहु-म्, लुक् ६३ यस्कादिभ्यो गोत्रे । (३) गोत्रे ७०

---

१—(गणपा०) पैल, शालङ्कि, सात्यकि, सात्यंकामि, (सात्यकामि का०) राहवि, रावणि, औदञ्चि, औदव्रजि (औदव्यज्ञि), औदमेघि, औदमज्जि, औदभृज्जि, दैवस्थानि, पैङ्गलौदायनि, (पैङ्गलायनि का०), राहक्षति, (रोहक्षिति, रागक्षति का०), भौलिङ्गि, राणि, औदन्यि, औद्गाहमानि, औज्जिहानि, औदशुद्धि, (औदबुद्धि का०), तद्राजाच्चाणः। देवि, सौमनि, ऊहमानि, राणायनि। आकृतिगणोऽयम् इति पैलादिः।

२—(गणपा०) तौल्वलि, धारणि, पारणि, रावणि, दैलीपि, दैवति, (दैवल्कि का०), वार्कलि, नैवकि (नैवति), दैवमति (दैवमित्रि), दैवयज्ञि, चाफट्टकि, वैल्वकि, वैङ्कि (बैकि, वैकि का०), अनुराहति (आनुहारति का०), पौष्कर सादि, आनुरोहति, आनुति (आनुमति का०), प्रादोहनि, नैमिश्रि, प्राडाहति (प्राणाहति का०), वान्धकि (रान्धकि का०), वैशीति, आसिनासि, आहिंसि, आसुरि, नैमिषि, आसिबन्धकि, पौष्पि (पौष्कि का०), कारेणुपालि, वैकर्णि, वैरकि (वैहति का०), प्रावाहणि, मांधातकि, श्वाफल्कि, आयुधि, वैलकि, कामलि, आसुराहति, कान्दकि, दौषकगति, आन्तराहति इति तौल्वल्यादिः।

३—(गणपा०) यस्क, लह्य (लभ्य का०), द्रुह्य (दुह्य का०), अयःस्थूण, तृणकर्ण, सदामत्त, कम्बलहार (कम्बलभार का०), वहिर्याग (अहिर्याग का०), कर्णाढक (कर्णाटक का०), पर्णाढक, पिण्डीजंघ, वकसक्थ, विश्रि, कुद्रि, अजवस्ति, मित्रयुः, रक्षोमुख (रक्षामुख का०), जंघारथ, उत्कास, कटुक (कटुकमन्थक का०), मथक (मन्थक), पुष्करसद्, विषपुट, उपरिमेखल, क्रोष्टुमान, क्रोष्टुपाद, क्रोष्टुमाय, शीर्षमाय, खरप, पदक, वर्षुक (वर्मक का०), भलन्दन, भडिल, भण्डिल, भडित, भण्डित, वस्ति, कद्रु इति यस्कादिः।

ब-म्, लुक्, गोत्रे ६४ यञञोश्च । (१)

बहु-म्, लुक्, गोत्रे ६५ अत्रि-भृगु-कुत्स-वशिष्ठ-गोतमाङ्गिरोभ्यश्च ।

" " " ६६ बह्वच इञः प्राच्यभरतेषु ।

" " " ६७ न गोपवनादिभ्यः । (२)

" " " ६८ तिक-कितवादिभ्यो द्वन्द्वे । (३)

" " " ६९ उपकादिभ्योऽन्यतरस्यामद्वन्द्वे । (४)

" " " ७० आगस्त्य-कौण्डिन्ययोरगस्तिकुण्डिनच् ।

लुक् ७१ सुपो धातु-प्रातिपदिकयोः ।

---

१—(वा०) यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम् ।

२—(गणपा०) गोपवन, शैयु, शिग्रु, बिन्दु, भाजन, अश्वावतान (अश्व, अवतान का०), श्यामाक (श्योमाक), श्यामक, श्यापर्ण (श्वापर्ण का०), विदाद्यन्तर्गणोऽयं गोपवनादिः ।

३—(गणपा०) तिककितवाः, वङ्खरभण्डीरथाः, उपकलमकाः, पफकनरकाः, वकनखगुदपरिणद्धाः (वकनखश्वगुद का०) उब्जककुभाः, लङ्कशान्तमुखाः, उत्तरशलङ्कटाः (उरसलंकटाः का०) कृष्णाजिनकृष्णसुन्दराः, भ्रष्टककपिष्ठलाः, अग्निवेशदशेरुकाः (अग्निवेशदासरेकाः) इति तिककितवादिः ।

४—(गणपा०) उपक, लमक, भ्रष्टक, कपिष्ठल, कृष्णाजिन, कृष्णसुन्दर, चूडारक, आडरक (अण्डारक), गडुक, उदङ्क, सुधायुक (सुपर्यंक), अबन्धक, पिङ्गलक, पिष्ट, सुपिष्ठ (सपिष्ट), मयूरकर्ण, खरीजंघ (खारिजंघ का०), शलाथल (शलावल का०), पतंजल, पदञ्जल, कठेरणि, कुषीतक, काशकृत्स्न, निदाघ, कलशीकण्ठ, दामकण्ठ, कृष्णपिङ्गल, कर्णक, पर्णक, जटिलक, वधिरक, जन्तुक, अनुलोम, अनुपद, प्रतिलोम, अपजग्ध, प्रतान, अनभिहित, कमक, वटारक, लेखाभ्र, कमन्दक, पिञ्जूलक (पिञ्जल का०), वर्णक, मसूरकर्ण, मदाघ, कवन्तक, कमन्तक, कदामत्त, दामकण्ठ, पण्डारक, इत्युपकादयः ।

| | | |
|---|---|---|
| लुक् | ७२ अदि-प्रभृतिभ्यः शपः । | शपः ७६ |
| शपो, लुक् | ७३ बहुलं छन्दसि । | |
| लुक् | ७४ यङोऽचि च । | |
| शपः | ७५ जुहोत्यादिभ्यः श्लुः । | श्लुः ७६ |
| शपः श्लुः | ७६ बहुलं छन्दसि । | |
| लुक् | ७७ गाति-स्था-घु-पा-भूभ्यः सिचः परस्मैपदेषु । (१) | सिचः ७९, प-षु ७८ |
| सिचः,लुक्,प-षु | ७८ विभाषा घ्रा-धेट्-शा-च्छासः । | विभाषा ७९ |
| सिचः, वि-षा, लुक् | ७९ तनादिभ्यस्तथासोः । | |
| लुक् | ८० मन्त्रे घस-ह्वर-णश-वृ-दहाद्वृच्-कृ-गमि-जनिभ्यो लेः । | लेः ८१ |
| लेः, लुक् | ८१ आमः । | |
| लुक् | ८२ अव्ययादाप्सुपः । | सुपः ८३ |
| सुपः, लुक् | ८३ नाव्ययीभावादतोऽम्त्वपञ्चम्याः । | अव्य-त्, अतोऽम् ८४ |
| अ-तु, अतोऽम् | ८४ तृतीयासप्तम्योर्बहुलम् । (२) | |

(लुट आदेश—)

८५ लुटः प्रथमस्य डारौरसः ।

इति द्वितीयाध्यायस्य चतुर्थः पादः ।

द्वितीयाध्यायः समाप्तः ।

---

१—(वा०) गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम् ।

२—(वा०) सप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यमिति वक्तव्यम् ।

# अथ तृतीयोऽध्यायः

## प्रथमः पादः

(प्रत्ययाधिकार—)

१ प्रत्ययः । प्र-यः ५।४।१६०

(प्रत्ययस्थाननिर्देश—)

प्रत्ययः २ परश्च ।

(प्रत्ययस्वरनिर्देश—)

प्रत्ययः ३ आद्युदात्तश्च ।

प्रत्ययौ ४ अनुदात्तौ सुप्पितौ ।

(सन्प्रत्यय—)

५ गुप्तिज्किद्भ्यः सन् । (१) सन् ७

सन् ६ मान-बध-दान्-शान्भ्यो दीर्घश्चाभ्यासस्य । (२)

सन् ७ धातोः कर्मणः समानकर्तृकादिच्छायां वा । (३) वा ११, कर्मणः १०, इच्छायाम् ६

(सुब्धातुप्रत्यय—)

कर्मणः इच्छायाम् ८ सुप आत्मनः क्यच् । (४) सुपः ११, आत्मनः ६, क्यच् १०

---

१—(वा०) निन्दाक्षमाव्याधिप्रतीकारेषु सन्निष्यते।

२—(वा०) अत्रापि सन्नर्थविशेष इष्यते। मानेर्जिज्ञासायाम्। वधेर्वैरूप्ये। दानेरार्जवे। शानेर्निशाने।

३—(वा०) (क) आशङ्कायामुपसंख्यानम्। (ख) इच्छासन्नन्तात्प्रतिषेधो वक्तव्यः।

४—(वा०) (क) क्यचि मान्ताव्ययप्रतिषेधो वक्तव्यः। (ख) छन्दसि परेच्छायामिति वक्तव्यम्।

| | | |
|---|---|---|
| सुपः, आत्मनः कर्मणःइच्छायाम् | ९ काम्यच्च । | |
| कर्मणः, सुपः वा, क्यच् | १० उपमानादाचारे । (१) | आचारे ११ |
| उपमानात् सुपः, आचारे, वा क्यच् | ११ कर्तुः क्यङ् सलोपश्च । (२) | क्यङ् १८ |
| | १२ भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः । | भुवि १३ |
| भुवि, वा, | १३ लोहितादिडाज्भ्यः क्यष् । (३) | |
| क्यङ् | १४ कष्टाय क्रमणे । (४) | |
| क्यङ् | १५ कर्मणो रोमन्थतपोभ्यां वर्तिचरोः । (५) | कर्मणः २० |
| कर्मणः, क्यङ् | १६ बाष्पोष्मभ्यामुद्वमने । (६) | |
| कर्मणः क्यङ् | १७ शब्द-वैर-कलहाभ्र-कण्व-मेघेभ्यः करणे । (७) | करणे २१ |
| करणे, क्यङ् | १८ सुखादिभ्यः कर्तृवेदनायाम् । | |
| करणे | १९ नमो-वरिवश्चित्रङः क्यच् । | |
| करणे | २० पुच्छ-भाण्ड-चीवराण्णिङ् । | |

---

१—(वा०) अधिकरणाच्चेति वक्तव्यम् ।

२—(वा०) (क) ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया । (ख) आचारेऽवगल्भक्लीवह्लोडेभ्यः क्विब् वा वक्तव्यः । (ग) सर्वप्रातिपदिकेभ्य इत्येके ।

३—(वा०) लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि ।

४—(वा०) सत्रकष्टकक्षकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम् ।

५—(वा०) (क) हनुचलन इति वक्तव्यम् । (ख) तपसः परस्मैपदं च ।

६—(वा०) फेनाच्चेति वक्तव्यम् ।

७—(वा०) (क) सुदिनदुर्दिननीहारेभ्यश्चेति वक्तव्यम् । (ख) अटाट्टाशीकाकोटापोटासोटाकष्टाग्रहणं कर्तव्यम् ।

करणे २१ मुण्ड-मिश्र-श्लक्ष्ण-लवण-व्रत-वस्त्र-हल-कल-कृत-तूस्तेभ्यो णिच्। (१)

२२ धातोरेकाचो हलादेः क्रियासमभिहारे यङ्। (२) यङ् २४

यङ् २३ नित्यं कौटिल्ये गतौ।

यङ् २४ लुप-सद-चर-जप-जभ-दह-दश-गॄभ्यो भावगर्हायाम्।

२५ सत्याप-पाश-रूप-वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो णिच्।(३) णिच् २६

णिच् २६ हेतुमति च। (४)

२७ कण्ड्वादिभ्यो यक्।

२८ गुपू-धूप-विच्छ-पणि-पनिभ्य आयः।

२९ ऋतेरीयङ्।

३० कमेर्णिङ्।

३१ आयादय आर्धधातुके वा।

---

१—(वा०) हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थम्।

२—(वा०) सूचिसूत्रिमूत्र्यटयर्त्यशूर्णोतीनां ग्रहणं यङ्विधावनेकाजहलाद्यर्थम्।

३—(वा०) अर्थवेदसत्यानामापुग्वक्तव्यः।

४—(वा०) (क) तत्करोतीत्युपसंख्यानं सूत्रयत्याद्यर्थम्। (ख) आख्यानात्कृतस्तदाचष्ट इति कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्। (ग) आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम्। (घ) चित्रीकरणे प्रापि। (ङ) नक्षत्रयोगे ज्ञि।

३२ सनाद्यन्ता धातवः ।

(विकरणप्रत्यय—)

३३ स्यतासी लृलुटोः ।

३४ सिब्बहुलं लेटि ।

३५ कास्प्रत्ययादाममन्त्रे लिटि(१) आम् ४२, लिटि ३९

आम्, लिटि ३६ इजादेश्च गुरुमतोऽनृच्छः।(२)

आम् लिटि ३७ दयायासश्च ।

आम्, लिटि ३८ उष-विद-जागृभ्योऽन्यतरस्याम्। अ-म् ३९

लिटि, वा, आम् ३९ भी-ही-भृ-हुवां श्लुवच्च ।

४० कृञ्चानुप्रयुज्यते लिटि ।

४१ विदाङ्कुर्वन्त्वित्यन्यतरस्याम् । अ-म् ४२

अन्यतरस्याम् आम् ४२ अभ्युत्सादयां-प्रजनयां-चिकयां-रमयामकः पावयांक्रियाद्वि-दामक्रन्निति छन्दसि ।

४३ च्लि लुङि ।

(च्लेरादेश—)

४४ च्लेः सिच् । (३) च्लेः ६६

च्लेः ४५ शल इगुपधादनिटः क्सः । क्सः ४७

च्लेः, क्सः ४६ श्लिष आलिङ्गने ।

च्लेः क्सः ४७ न दृशः ।

---

१—(वा०) कास्यनेकाच इति वक्तव्यं चुलुम्पाद्यर्थम्।

२—(वा०) ऊर्णोतेश्च प्रतिषेधो वक्तव्यः।

३—(वा०) स्पृशमृशकृषतृपदृपां सिज्वा वक्तव्यः।

| | | |
|---|---|---|
| च्लेः | ४८ णि-श्रि-द्रु-स्रुभ्यः कर्तरि चङ् (१) | चङ् ५१ |
| च्लेश्चङ् | ४९ विभाषा धेट्-श्व्योः । | विभाषा ५० |
| " विभाषा | ५० गुपेश्छन्दसि । | छन्दसि ५१ |
| " छन्दसि | ५१ नोनयति-ध्वनयत्येलयत्यर्दयतिभ्यः । | |
| च्लेः | ५२ अस्यति-वक्ति-ख्यातिभ्योऽङ् । | अङ् ५९ |
| च्लेरङ् | ५३ लिपि-सिचि-ह्वश्च । | लिपिसिचिह्वः ५४ |
| लिपिसिचिह्वः च्लेरङ् | ५४ आत्मनेपदेष्वन्यतरस्याम् । | |
| च्लेः, अङ् | ५५ पुषादि-द्युताद्य्-लृदितः परस्मैपदेषु । | परस्मैपदेषु ५८ |
| " " | ५६ सर्ति-शास्त्यर्तिभ्यश्च । | |
| च्लेरङ् प-षु | ५७ इरितो वा । | वा ५८ |
| च्लेरङ्, वा | ५८ जॄ-स्तम्भु-म्रुचु-म्लुचु-ग्रुचु-ग्लुचु-ग्लुञ्चु-श्विभ्यश्च । | |
| च्लेरङ् | ५९ कृ-मृ-दृ-रुहिभ्यश्छन्दसि । | |
| | ६० चिण् ते पदः । | चिण् ६५, ते ६६ |
| चिण्, ते, च्लेः | ६१ दीप-जन-बुध-पूरि-तायि-प्यायिभ्योऽन्यतरस्याम् । | अन्यतरस्याम् ६३ |
| च्लेश्चिण्तेवा | ६२ अचः कर्मकर्तरि । | कर्मकर्तरि ६५ |
| च्लेश्चिण् ते वा कर्मकर्तरि | ६३ दुहश्च । | |
| च्लेश्चिण् ते, कर्म-रि | ६४ न रुधः । | न ६५ |

१—(वा०) कमेरुपसंख्यानम् ।

| | | |
|---|---|---|
| कर्म-रि, च्ले-श्चिण्, न | ६५ तपोऽनुतापे च । | |
| | ६६ चिण् भावकर्मणोः । | |
| भावकर्मणोः | ६७ सार्वधातुके यक् । | सार्वधातुके ८२ |
| | (विकरणप्रत्ययाः प्रकृताः--) | |
| सार्व-के | ६८ कर्तरि शप् । | कर्तरि ८८ |
| कर्तरि, सार्व-के | ६९ दिवादिभ्यः श्यन् । | श्यन् ७२ |
| श्यन्, कर्तरि | ७० वा भ्राश-भ्लाश-भ्रमु-क्रमु-क्लमु-त्रसि-त्रुटि-लषः । | |
| " " | ७१ यसोऽनुपसर्गात् । | |
| " " | ७२ संयसश्च । | |
| कर्तरि, सा-के | ७३ स्वादिभ्यः श्नुः । | श्नुः ७६ |
| श्नुः, कर्तरि, सा-के | ७४ श्रुवः शृ च । | |
| श्नुः | ७५ अक्षोऽन्यतरस्याम् । | अन्यतरस्याम् ७६ |
| अन्य-म्, श्नुः | ७६ तनूकरणे तक्षः । | |
| कर्तरि | ७७ तुदादिभ्यः शः । | |
| " | ७८ रुधादिभ्यः श्नम् । | |
| " | ७९ तनादि-कृञ्भ्य उः । | उः ८० |
| उः | ८० धिन्वि-कृण्व्योर च । | |
| | ८१ क्र्यादिभ्यः श्ना । | श्ना ८२ |
| श्ना | ८२ स्तम्भु-स्तुम्भु-स्कम्भु-स्कुम्भु-स्कुञ्भ्यः श्नुश्च । | |
| | ८३ हलः श्नः शानज्झौ । | श्नः ८४, हौ ८४ |
| श्नः, हौ, | ८४ छन्दसि शायजपि । | छन्दसि ८६ |
| | (व्यत्यय—) | |
| छन्दसि | ८५ व्यत्ययो बहुलम् । | |

| | | |
|---|---|---|
| छन्दसि | **८६ लिङ्याशिष्यङ् । (१)** | |
| | (कर्मवद्भाव—) | |
| कर्ता | **८७ कर्मवत्कर्मणा तुल्यक्रियः ।** | कर्मवत् ६० |
| कर्मवत्, कर्ता | **८८ तपस्तपःकर्मकस्यैव ।** | |
| कर्मकर्तरि | **८९ न दुह-स्नु-नमां यक्चिणौ । (२)** | |
| कर्मकर्तरि | **९० कुषिरजोः प्राचां श्यन् परस्मैपदं च ।** | |
| | (धातुविहिताः प्रत्ययाः उच्यन्ते—) | |
| | **९१ धातोः ।** | धातोः३।४।११७ |
| | (उपपदसंज्ञा—) | |
| | **९२ तत्रोपपदं सप्तमीस्थम् ।** | तत्र ९४ |
| | (कृत्संज्ञा—) | |
| तत्र | **९३ कृदतिङ् ।** | कृत् ३।४।७७ |
| तत्र | **९४ वाऽसरूपोऽस्त्रियाम् ।** | |
| | (कृत्सु कृत्यप्रत्यय—) | |
| | **९५ कृत्याः ।** | कृत्याः १३२ |
| | **९६ तव्यत्तव्यानीयरः । (३)** | |
| | **९७ अचो यत् । (४)** | यत् १०६ |
| यत् | **९८ पोरदुपधात् ।** | |
| " | **९९ शकिसहोश्च ।** | |

१—(वा०) दृशेरग्वक्तव्यः ।

२—(वा०) यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम् ।

३—(वा०) (क)वसेस्तव्यत्कर्तरि णिच्च । (ख) केलिमर उपसंख्यानम् ।

४—(वा०) (क)तकिशसिचतियतिजनीनामुपसंख्यानम् । (ख)हनो वा वध च ।

| | | |
|---|---|---|
| यत् | १०० गद-मद-चर-यमश्चानुपसर्गे। (१) | अनुपसर्गे १०८ |
| " | १०१ अवद्य-पण्य-वर्या गर्ह्य-पणित-व्यानिरोधेषु । | |
| | १०२ वह्यं करणम् । | |
| | १०३ अर्यः स्वामिवैश्ययोः । (२) | |
| | १०४ उपसर्या काल्या प्रजने । | |
| | १०५ अजर्यं संगतम् । | |
| अनुपसर्गे, यत् | १०६ वदः सुपि क्यप् च । | सुपि १०८<br>क्यप् १२१ |
| सुप्यनुपसर्गे, क्यप् | १०७ भुवो भावे । | भावे १०८ |
| " भावे " | १०८ हनस्त च । | |
| | १०९ एति-स्तु-शास्-वृ-दृ-जुषः क्यप् । (३) | |
| क्यप् | ११० ऋदुपधाच्चाक्लृपिचृतेः (४) | |
| " | १११ ई च खनः । | |
| " | ११२ भृञोऽसंज्ञायाम् । (५) | |
| " | ११३ मृजेर्विभाषा । | |
| | ११४ राजसूय-सूर्य-मृषोद्य-रुच्य-कुप्य-कृष्टपच्याव्यथ्याः । | |

---

१—(वा०) चरेराङि चागुरौ।

२—(वा०) स्वामिन्यन्तोदात्तत्वञ्च वक्तव्यम्।

३—(वा०) (क) शंसिदुहिगुहिभ्यो वेति वक्तव्यम्। (ख) आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम्।

४—(वा०) (क) पाणौ सृजेर्ण्यद्वक्तव्यः। (ख) समवपूर्वाच्च।

५—(वा०) संपूर्वाद्विभाषा।

११५ भिद्योद्ध्यौ नदे ।

११६ पुष्य-सिध्यौ नक्षत्रे ।

क्यप् ११७ विपूय-विनीय-जित्या मुञ्ज-
कल्क-हलिषु ।

" ११८ प्रत्यपिभ्यां ग्रहेः । (१)

" ११९ पदास्वैरि-बाह्या-पक्ष्येषु च ।

" १२० विभाषा कृ-वृषोः ।

" १२१ युग्यश्च पत्रे ।

१२२ अमावस्यदन्यतरस्याम् ।

१२३ छन्दसि निष्टर्क्य-देवहूय-प्रणी-
योन्नीयोच्छिष्य-मर्य-स्तर्याध्वर्य ।
खन्य-खान्य-देवयज्यापृच्छ्य-
प्रतिषीव्य-ब्रह्मवाद्य-भाव्य-स्ता-
व्योपचाय्य-पृडानि । (२)

१२४ ऋहलोर्ण्यत् । ण्यत् १३१

ण्यत् १२५ ओरावश्यके ।

" १२६ आसु-यु-वपि-रपि-लपि-त्रपि-
चमश्च ।

" १२७ आनाय्योऽनित्ये ।

" १२८ प्रणाय्योऽसंमतौ ।

---

१—(वा०) छन्दसीति वक्तव्यम् ।*
२—(वा०) हिरण्य इति वक्तव्यम् ।

---

* काशिकाकारेण छन्दसीति पदं सूत्र एव प्रक्षिप्तम् ।

ण्यत् १२९ पाय्य-सान्नाय्य-निकाय्य-धाय्या मान-हविर्निवास-सामिधेनीषु ।

,, १३० क्रतौ कुण्डपाय्य-संचाय्यौ ।

,, १३१ अग्नौ परिचाय्योपचाय्य-समूह्याः ।

१३२ चित्याग्निचित्ये च ।

(कृत्प्रत्यय—)

१३३ ण्वुल्-तृचौ ।

१३४ नन्दि-ग्रहि-पचादिभ्यो ल्यु-णिन्यचः । (१)

१३५ इगुपध-ज्ञा-प्री-किरः कः । कः १३६

---

१—(गणपा०) नन्दिवाशि (वासि) मदि दू (मदि भूषि) षिसाधिवर्धिशोभि-रोचिभ्यो ण्यन्तेभ्यः संज्ञायाम्। नन्दनः। वाशनः (वासनः का०), मदनः, दूषणः (भूषणः), साधनः, वर्धनः, शोभनः, रोचनः। सहितपिदमः (दमेः का०) संज्ञायाम्। सहनः, तपनः, दमनः, जल्पनः, रमणः, दर्पणः, संक्रन्दनः, संकर्षणः, संहर्षणः, जनार्दनः, यवनः (पवनः का०), मधुसूदनः, बिभीषणः, लवणः (निपातनाण्णत्वम् का०), चित्तविनाशनः, कुलदमनः, शत्रुदमनः। इति नन्द्यादिः।

ग्राही, उत्साही, उद्दासी, उद्भासी, स्थायी, मन्त्री, संमर्दी, रक्षश्रु (वस का०) वपशां नौ। निरक्षी, निश्रावी (निवासी का०), निवापी, निशायी। याचृ-व्याहृव्रजवदवसां प्रतिषिद्धानाम् (याचिव्याहृसंव्याहृव्रज का०) अयाची, अव्या-हारी, असंव्याहारी, अव्राजी, अवादी, अवासी। अचामचित्तकर्तृकाणाम् (प्रति-षिद्धानामित्येव का०)। अकारिन्, अहारिन्, अविनायी, विशायी, (अविशायी का०) विषायी (अविषायी), विशयी, विषयी देशे। विषयी देशः। अभिभावी भूते। अपराधी, उपरोधी, परिभवी, परिभावी इति नन्द्यादिः।

पच, वच, वप, वद, चल, पत, नदट्, भषट्, प्लवट्, चरट्, गरट्, तरट्, चोरट्, गाहट् (ग्राहट् का०), सूरट् (सूदट् का०), देवट्, दोषट्, रज (जर का०), मद (मर का०,) क्षप (क्षम का०), सेव, मेष, कोष, (कोप, क्रोध का०), मेध, नर्त (मेधानर्त का०), व्रण, दर्श, सर्प, दम्भ, दर्प, जारभर, श्वपच, तप, बस, क्षर, मोरट्, दंश। आकृतिगणः। इति पचादिः।

| | | |
|---|---|---|
| कः | १३६ आतश्चोपसर्गे । | उपसर्गे १३७ |
| उपसर्गे, कः | १३७ पा-घ्रा-ध्मा-धेट्-दृशः शः । (१) | शः १३९ |
| शः | १३८ अनुपसर्गाल्लिम्प-विन्द-धारि-पारि-वेद्युदेजि-चेति-साति-साहिभ्यश्च । (२) | अनुपसर्गात् १४० |
| शः, अनुपसर्गात् | १३९ ददाति-दधात्योर्विभाषा । | विभाषा १४० |
| विभाषा, अ-त् | १४० ज्वलिति-कसन्तेभ्यो णः । (३) | णः १४३ |
| णः | १४१ श्याद्व्यधास्रु-संस्रवतीणवसा-वहृ-लिह-श्लिष-श्वसश्च । | |
| ,, | १४२ दुन्योरनुपसर्गे । | |
| ,, | १४३ विभाषा ग्रहः । (४) | ग्रहः १४४ |
| ग्रहः | १४४ गेहे कः । | शिल्पिनि, १४७ |
| | १४५ शिल्पिनि ष्वुन् । (५) | |
| शिल्पिनि | १४६ गस्थकन् । | गः १४७ |
| ,, गः | १४७ ण्युट् च । | ण्युट् १४८ |
| ण्युट् | १४८ हश्च व्रीहि-कालयोः । | |
| | १४९ प्रु-सृ-ल्वः समभिहारे वुन् । | वुन् १५० |
| वुन् | १५० आशिषि च । | |

इति तृतीयाध्यायस्य प्रथमः पादः ।

---

१—(वा०) जिघ्रतेः संज्ञायां प्रतिषेधो वक्तव्यः ।

२—(वा०) (क) नौ लिम्पेरिति वक्तव्यम्: (ख) गवादिषु विन्देः संज्ञायाम् ।

३—(वा०) तनोतेर्ण उपसंख्यानम् ।

४—(वा०) भवतेश्चेति वक्तव्यम् ।*

५—(वा०) नृति-खनि-रञ्जिभ्यः परिगणनं कर्तव्यम् ।

---

* इदं वार्तिकं भाष्ये न दृश्यते ।

# अथ द्वितीयः पादः

(उपपदप्रत्यय—)

तत्र (अण्प्रत्यय—)

| | | |
|---|---|---|
| | १ कर्मण्यण् । (१) | कर्मणि ५७ अण् २ |
| कर्मणि अण् | २ ह्वावामश्च । | |

(कप्रत्यय—)

| | | |
|---|---|---|
| कर्मणि | ३ आतोऽनुपसर्गे कः । | कः ७, अनुपसर्गे ६० |
| कः | ४ सुपि स्थः । | सुपि ७५ |
| कर्मणि कः | ५ तुन्द-शोकयोः परिमृजापनुदोः । (२) | |
| ,, ,, | ६ प्रे दाज्ञः । | |
| ,, ,, | ७ समि ख्यः । | |
| कर्मणि अनुपसर्गे | ८ गापोष्टक् । (३) | |

(अच्प्रत्यय—)

| | | |
|---|---|---|
| कर्मणि | ९ हरतेरनुद्यमनेऽच् । (४) | अच् १५, हरतेः ११ |
| क-णि हरतेः, अच् | १० वयसि च । | |

---

१—(वा०) (क) शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् । (ख) ईक्षिक्षमिभ्यां चेति वक्तव्यम् ।

२—(वा०) (क) आलस्यसुखाहरणयोरिति वक्तव्यम् । (ख) कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् ।

३—(वा०) (क) सुरासीध्वोः पिबतेरिति वक्तव्यम् । (ख) बहुलं छन्दसीति वक्तव्यम् ।

४—(वा०) (क) अच्प्रकरणे शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसंख्यानम् । (ख) सूत्रे च धार्यर्थे ।

| | | |
|---|---|---|
| हरतेः, कर्मणि, अच् | ११ आङि ताच्छील्ये । | |
| कर्मणि, अच् | १२ अर्हः । | |
| सुपि, अच् | १३ स्तम्ब-कर्णयो रमिजपोः । (१) | |
| अच् | १४ शमि धातोः संज्ञायाम् । | |
| सुपि, अच् | १५ अधिकरणे शेतेः । (२) | अधिकरणे १६ |
| | (टप्रत्यय—) | |
| अधिकरणे सुपि | १६ चरेष्टः | चरेः १७ टः २३ |
| चरेष्टः | १७ भिक्षा-सेनादायेषु च । | |
| टः | १८ पुरोऽग्रतोऽग्रेषु सर्तेः । | सर्तेः १९ |
| सर्तेष्टः | १९ पूर्वे कर्तरि । | |
| कर्मणि, टः | २० कृञो हेतु-ताच्छील्यानुलोम्येषु । | |
| कर्मणि, सुपि, टः | २१ दिवा-विभा-निशा-प्रभा-भास्कारान्तानन्तादि-बहु-नान्दी-किंलिपि-लिबि-बलि भक्ति-कर्तृचित्र-क्षेत्र-संख्या-जङ्घा-बाह्वहर्यत्तद्धनुररुःषु । (३) | कृञः २३ |
| कर्मणि, कृञः टः | २२ कर्मणि भृतौ । | |
| कृञः, टः | २३ न शब्द-श्लोक-कलह-गाथा-वैर-चाटु-सूत्र-मन्त्र-पदेषु । | |
| | (इन्प्रत्यय—) | |
| कर्मणि कृञः | २४ स्तम्बशकृतोरिन् । (४) | इन् २७ |

---

१—(वा०) हस्तिसूचकयोरिति वक्तव्यम् ।

२—(वा०) (क) पार्श्वादिषूपसंख्यानम् । (ख) दिग्धसहपूर्वाच्च । (ग) उत्तानादिषु कर्तृषु । (घ) गिरौ डश्छन्दसि ।

३—(वा०) कियत्तद्बहुषु कृञोऽज्विधानम् ।

४—(वा०) व्रीहिवत्सयोरिति वक्तव्यम् ।

| | | |
|---|---|---|
| क-णि इन् | २५ हरतेर्दृति-नाथयोः पशौ । | |
| इन् | २६ फलेग्रहिरात्मम्भरिश्च । | |
| कर्मणि, इन् | २७ छन्दसि वन-सन-रक्षि-मथाम् । | |
| | (खश्प्रत्यय—) | |
| कर्मणि | २८ एजेः खश् । (१) | खश् ३७ |
| खश् | २९ नासिका-स्तनयोर्ध्माधेटोः । (२) | ध्माधेटोः ३० |
| ध्माधेटोः, खश् | ३० नाडीमुष्ट्योश्च । | |
| खश् क-णि | ३१ उदि कूले रुजिवहोः । | |
| " " | ३२ वहाभ्रे लिहः । | |
| " " | ३३ परिमाणे पचः । | पचः ३४ |
| पचः, खश् | ३४ मितनखे च । | |
| खश् | ३५ विध्वरुषोस्तुदः । | |
| " | ३६ असूर्यललाटयोर्दृशितपोः । | |
| | ३७ उग्रम्पश्येरंमद-पाणिंधमाश्च । | |
| | (खच्प्रत्यय–) | |
| कर्मणि | ३८ प्रियवशे वदः खच् । (३) | खच् ४७ |
| " खच् | ३९ द्विषत्परयोस्तापेः । | |
| " " | ४० वाचि यमो व्रते । | |
| " " | ४१ पूःसर्वयोर्दारिसहोः । (४) | |
| " " | ४२ सर्व-कूलाभ्र-करीषेषु कषः । | |

---

१—(वा०) खश्प्रत्यये वातशुनीतिलशर्धेष्वजधेट्तुदजहातीनामुपसंख्यानम् ।

२—(वा०) (क) स्तने धेटः । (ख) नासिकायां तु ध्मश्च धेटश्च ।

३—(वा०) (क) खच्प्रकरणे गमेः सुप्युपसंख्यानम् । (ख) विहायसो विह च । (ग) खच्च डिद्वा वक्तव्यः । (घ) डेच विहायसो विहादेशो वक्तव्यः ।

४—(वा०) भगे च दारेरिति वक्तव्यम् ।

| | | |
|---|---|---|
| कर्मणि खच् | ४३ मेघर्ति-भयेषु कृञः । (१) | कृञः ४४ |
| ” ” | ४४ क्षेम-प्रिय-मद्रेऽण् च । | |
| सुपि, खच् | ४५ आशिते भुवः करणभावयोः । | |
| | ४६ सञ्ज्ञायां भृ-तृ-वृ-जि-धारि-सहि-तपि-दमः । | संज्ञायाम् ४७ |
| संज्ञायां, सुपि, खच् | ४७ गमश्च । | गमः ४८ |
| | (डप्रत्यय—) | |
| कर्मणि, गमः | ४८ अन्तात्यन्ताध्व-दूर-पार-सर्वानन्तेषु डः । (२) | डः ५० |
| डः, कर्मणि | ४९ आशिषि हनः । (३) | हनः ५५ |
| डः, कर्मणि | ५० अपे क्लेश-तमसोः । | |
| हनः, कर्मणि, | ५१ कुमारशीर्षयोर्णिनिः । | |
| | (टक्प्रत्यय—) | |
| हनः, कर्मणि, | ५२ लक्षणे जायापत्योष्टक् । | टक् ५४ |
| हनः, क-णि, टक् | ५३ अमनुष्यकर्तृके च । | |
| हनः, कर्मणि, टक | ५४ शक्तौ हस्तिकपाटयोः । | |
| | ५५ पाणिघताडघौ शिल्पिनि । (४) | |
| | ५६ आढ्य-सुभग-स्थूल-पलित-नग्नान्ध-प्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् । | आढ्य-षु ५७<br>च्व्य-च्वौ ५७ |

---

१—(वा०) उपपदविधौ भयादिग्रहणं तदन्तविधिं प्रयोजयति ।

२—(वा०) (क) डप्रकरणे सर्वत्रपन्नयोरुपसंख्यानम् । (ख) उरसो लोपश्च । (ग) सुदुरोरधिकरणे ।(घ) निरो देशे । (ङ) डप्रकरणेऽन्येष्वपि दृश्यते ।

३—(वा०) (क) दारावाहनोऽणन्तस्य च टः संज्ञायाम् । (ख) चारौ वा । (ग) कर्मणि समि च।

४—(वा०) राजघ उपसंख्यानम् ।

| | | |
|---|---|---|
| आढ्य-षु, च्व्य-च्वौ, | ५७ कर्तरि भुवः खिष्णुच्-खुकञौ। | |
| | (अप्रत्यय—)* | |
| सुपि | ५८ स्पृशोऽनुदके क्विन्। | क्विन् ६० |
| क्विन् | ५९ ऋत्विग्दधृक्-स्रग्दिगुष्णिगञ्चु-युजि-क्रुञ्चाञ्च। | |
| क्विन् | ६० त्यदादिषु दृशोऽनालोचने कञ्च। (१) | |
| सुपि | ६१ सत्सू-द्विष-द्रुह-दुह-युज-विद-भिद-छिद-जि-नी-राजामुपसर्गेऽपि क्विप्। | उ-पि ७७ |
| उपसर्गेऽपि सुपि | ६२ भजो ण्विः। | ण्विः ६४ |
| उपसर्गेऽपि सुपि ण्विः | ६३ छन्दसि सहः। | छन्दसि ६७ |
| छन्दसि, सुपि, ण्विः | ६४ वहश्च। | वहः ६६ |
| वहः, छन्दसि, | ६५ कव्य-पुरीष-पुरीष्येषु ञ्युट्। | ञ्युट् ६६ |
| वहः, छन्दसि, ञ्युट् | ६६ हव्येऽनन्तःपादम्। | |
| छन्दसि, उपसर्गेऽपि सुपि | ६७ जन-सन-खन-क्रम-गमो विट्। | विट् ६९ |
| सुपि, विट् | ६८ अदोऽनन्ने। | अदः ६९ |
| अदः, विट् | ६९ क्रव्ये च। | |
| सुपि, | ७० दुहः कब्घश्च। | |

---

१—(वा०) (क) समानान्ययोश्चेति वक्तव्यम्। (ख) दृशेः क्सश्च वक्तव्यः।

* अविद्यमानः प्रत्ययोऽप्रत्ययः। यस्मिन् प्रत्यये सर्वे वर्णा लुप्यन्ते सोऽप्रत्यय इत्युच्यते। तादृशाश्च प्रत्ययाः—क्विन्, क्विप्, ण्वि, विट्, विच् एते सन्ति।

| | | |
|---|---|---|
| | ७१ मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् । (१) | मन्त्रे ७२ ण्विन् ७२ |
| मन्त्रे, ण्विन् | ७२ अवे यजः । | यजः ७३ |
| यजः | ७३ विजुपे छन्दसि । | छन्दसि ७४ विच् ७४ |
| | (मनिन्क्वनिप्वनिपः—) | |
| छन्दसि सुपि,उ-पि | ७४ आतो मनिन्क्वनिब्वनिपश्च । | मनि-पः ७५ |
| म-पः, विच् | ७५ अन्येभ्योऽपि दृश्यन्ते । | |
| | ७६ क्विप् च । | क्विप् ७७ |
| क्विप्, सुपि, उ-पि | ७७ स्थः क च । | |
| | (णिनिप्रत्यय—) | |
| | ७८ सुप्यजातौ णिनिस्ताच्छील्ये । (२) | सुपि, ८३ णिनि ८६ |
| णिनिः | ७९ कर्तर्युपमाने । | |
| सुपि, णिनिः | ८० व्रते । | |
| ,, ,, | ८१ बहुलमाभीक्ष्ण्ये । | |
| सुपि, णिनिः, | ८२ मनः । | मनः ८३ |
| मनः, सुपि, णिनिः | ८३ आत्ममाने खश्च । | |
| | (भूतकालिकक्कृत्प्रत्यय) | |
| | ८४ भूते ।* | भूते १२२ |
| णिनिः | ८५ करणे यजः । | |

१—(वा०) श्वेतवहादीनां डस्पदस्येति वक्तव्यम् ।

२—(वा०) (क) उत्प्रतिभ्यामाङि सर्तेरुपसंख्यानम् । (ख) साधुकारिणि च । (ग) ब्रह्मणि वदः ।

* स्वावधिकेषु प्रत्ययेषु प्रतिसूत्रं भूतपदोपस्थानात् प्रतिसूत्रमस्यानुवृत्तिर्न दर्शिता ।

| | | |
|---|---|---|
| णिनिः | ८६ कर्मणि हनः । | हनः ८८, क-णि ९२ |
| | (भूत-कालिकक्विप्प्रत्यय—) | |
| हनः, कर्मणि | ८७ ब्रह्म-भ्रूण-वृत्रेषु क्विप् । | क्विप् ९२ |
| हनः, क्विप् | ८८ बहुलं छन्दसि । | |
| कर्मणि, क्विप् | ८९ सुकर्म-पाप-मन्त्र पुण्येषु कृञः । | |
| " " | ९० सोमे सुञः । | |
| " " | ९१ अग्नौ चेः । | चेः ९२ |
| क-णि चेः, क्विप् | ९२ कर्मण्यग्न्याख्यायाम् । | |
| | ९३ कर्मणीनिर्विक्रियः । | |
| | (क्वनिप्प्रत्यय—) | |
| कर्मणि | ९४ दृशेः क्वनिप् । | क्वनिप् ९६ |
| क-णिं क्वनिप् | ९५ राजनि युधि-कृञः । | |
| युधिकृञः क्वनिप् | ९६ सहे च । | |
| | (डप्रत्यय—) | |
| | ९७ सप्तम्यां जनेर्डः । | जनेर्डः १०१ |
| जनेर्डः | ९८ पञ्चम्यामजातौ । | |
| " | ९९ उपसर्गे च संज्ञायाम् । | |
| " | १०० अनौ कर्मणि । | |
| " | १०१ अन्येष्वपि दृश्यते । | |
| | १०२ निष्ठा । (१) | |
| | १०३ सुयजोर्ङ्वनिप् । | |
| | १०४ जीर्यतेरतृन् । | |

---

१—(वा०) आदिकर्मणि निष्ठा वक्तव्या।

| | | |
|---|---|---|
| | १०५ छन्दसि लिट्। | छन्दसि १०७ |
| छन्दसि | १०६ लिटः कानज्वा। | वा, लिटः १०९ |
| छन्दसि,लिटः,वा | १०७ क्वसुश्च | क्वसुः १०९ |
| लिटः, क्वसुः, वा | १०८ भाषायां सद-वस-श्रुवः। | |
| | १०९ उपेयिवाननाश्वाननूचानश्च। | |
| | ११० लुङ् (१) | |
| | १११ अनद्यतने लङ्। (२) | अनद्यतने १२२ |
| अनद्यतने | ११२ अभिज्ञावचने लृट्। | अ-ने लृट् ११४, |
| अ-ने, अ-नेलृट् | ११३ न यदि। | |
| अ-ने, अ-ने, यदि | ११४ विभाषा साकाङ्क्षे। | |
| भूतौ-ने | ११५ परोक्षे लिट्। | परोक्षे ११८ लिट् ११७ |
| भू-ने, परोक्षे, लिट् | ११६ हशश्वतोर्लङ् च। | लङ् ११७ |
| लङ्लिटौ, भू-ने परोक्षे | ११७ प्रश्ने चासन्नकाले। | |
| भूता-न्ने परोक्षे | ११८ लट् स्मे। | लट् १२२, स्मे ११९ |
| लट् स्मे भू-न्ने | ११९ अपरोक्षे च। | |
| लट्, भूते | १२० ननौ पृष्टप्रतिवचने। | पृष्ट-न्ने १२१ |
| पृष्ट-ने, लट् | १२१ नन्वोर्विभाषा। | विभाषा १२२ |
| भूता-न्ने, लट्, वि-षा | १२२ पुरि लुङ् चास्मे। | |
| | (वर्तमानकालिककृत्प्रत्यय—) | |
| | १२३ वर्तमाने लट्।* | वर्तमाने ३।३।१ |

१—(वा०) वसतेर्लुङ्, रात्रिविशेषे जागरणसंततौ वक्तव्यः।
२—(वा०) परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये लङ् वक्तव्यः।
* प्रतिसूत्रमनुवृत्तिर्न दर्शिता।

| | | |
|---|---|---|
| | १२४ लटः शतृशानचावप्रथमासमानाधिकरणे । (१) | लटः १२६, शतृशानचौ १२६ |
| लटः, शतृ-चौ | १२५ सम्बोधने च । | |
| " " | १२६ लक्षणहेत्वोः क्रियायाः । | |
| | १२७ तौ सत् । | |
| | १२८ पूङ्यजोः शानन् । (२) | |
| | १२९ ताच्छील्य-वयोवचन-शक्तिषु चानश् । | |
| | १३० इङ्धार्योः शत्रकृच्छ्रिणि । | शतृ १३३ |
| शतृ | १३१ द्विषोऽमित्रे । | |
| शतृ | १३२ सुञो यज्ञसंयोगे । | |
| शतृ | १३३ अर्हः प्रशंसायाम् । | |
| | १३४ आ क्वेस्तच्छील-तद्धर्म-तत्साधु-कारिषु ।* | तच्छील-षु १७८ |
| तच्छी-षु | १३५ तृन् (३) | |
| तच्छील-षु | १३६ अलंकृञ्-निराकृञ्-प्रजनोत्पचोत्पतोन्मद-रुच्यपत्रप-वृतु-वृधु-सह-चर इष्णुच् । (४) | इष्णुच् १३८ |
| इष्णुच् | १३७ णेश्छन्दसि । | छन्दसि १३८ |

---

१—(वा०) माङ्याक्रोशे ।

२—(वा०) द्विषः शतुर्वा वचनम् ।

* प्रतिसूत्रमनुवृत्तिर्न दर्शिता ।

३—(वा०) (क) तृन्विधावृत्विक्षु चानुपसर्गस्य । (ख) नयतेः षुक्च । (ग) त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वं च । (घ) क्षदेश्च नियुक्ते । (ङ) छन्दसि तृच्च ।

४—(वा०) अलङ्कृञो मण्डनार्थाद्युचः पूर्वविप्रतिषेधेनेष्णुज्वक्तव्यः ।

| | | |
|---|---|---|
| छंदसि, इष्णुच् | १३८ भुवश्च । | भुवः १३९ |
| भुवः | १३९ ग्ला-जि-स्थश्च क्स्नुः । (१) | |
| | १४० त्रसि-गृधि-धृषि-क्षिपेः क्नुः । | |
| | १४१ शमित्यष्टाभ्यो घिनुण् । | घिनुण् १४५ |
| घिनुण् | १४२ संपृचानुरुधाङ्यमाङ्यस-परि-सृ-संसृज-परिदेवि-संज्वर-परि-क्षिप-परिरट-परिवद-परिमुह-दुष्-द्विष-द्रुह-दुह-युजाक्रीड-वि-विच-त्यज-रज-भजातिचरापा चरामुषाभ्याहनश्च । | |
| घिनुण् | १४३ वौ कष-लस-कत्थ-स्रम्भः । | वौ १४४ |
| वौ, घिनुण् | १४४ अपे च लषः । | |
| घिनुण् | १४५ प्रे लप-सृ-द्रु-मथ-वद-वसः । | |
| | १४६ निन्द-हिंस-क्लिश-खाद-विनाश-परिक्षिप-परिरट-परिवादि-व्या भाषासूयो वुञ् । | वुञ् १४७ |
| वुञ् | १४७ देविक्रुशोश्चोपसर्गे । | |
| | १४८ चलन-शब्दार्थादकर्मकाद्युच् । | अकर्मकात् १४९<br>युच् १५३ |
| अकर्मकात्, युच् | १४९ अनुदात्तेतश्च हलादेः । | |
| युच् | १५० जु-चङ्क्रम्य-दन्द्रम्य-सृ-गृधि-ज्वल-शुच-लष-पत-पदः । | |
| युच् | १५१ क्रुधमण्डार्थेभ्यश्च । | |
| युच् | १५२ न यः । | न १५३ |

---

१—(वा०)　दंशेश्छन्दस्युपसंख्यानम् ।

न, युच् १५३ सूद-दीप-दीक्षश्च ।

१५४ लष-पत-पद-स्था-भू-वृष-हन-कम-गम-शृभ्य उकञ् ।

१५५ जल्प-भिक्ष-कुट्ट-लुण्ठ-वृङः षाकन् ।

१५६ प्रजोरिनिः । इनिः १५७

इनिः १५७ जि-दृ-क्षि-विश्रीण्-वमाव्यथाभ्यम-परिभू-प्रसूभ्यश्च ।

१५८ स्पृहि-गृहि-पति-दयि-निद्रा-तन्द्रा-श्रद्धाभ्य-आलुच् । (१)

१५९ दा-धेट्-सि-शद-सदो रुः ।

१६० सृ-घस्यदः क्मरच् ।

१६१ भञ्ज-भास-मिदो घुरच् ।

१६२ विदि-भिदि-च्छिदेः कुरच् ।(२)

१६३ इण्-नश-जि-सर्तिभ्यः क्वरप् ।

१६४ गत्वरश्च ।

१६५ जागरूकः । ऊकः १६६

ऊकः १६६ यज-जप-दशां यङः ।

१६७ नमि-कम्पि-स्म्यजस-कम-हिंस-दीपो रः ।

१६८ सनाशंस-भिक्ष उः । उः १७०

उः १६९ बिन्दुरिच्छुः ।

---

१—(वा०) आलुचि शीङो ग्रहणम् ।
२—(वा०) व्यधेः सम्प्रसारणं कुरच्च वक्तव्यः ।

| | | |
|---|---|---|
| उः | १७० क्याच्छन्दसि । | छन्दसि १७१ |
| | १७१ आदृ-गम-हन-जनः किकिनौ लिट् च । (१) | |
| | १७२ स्वपितृषोर्नजिङ् । (२) | |
| | १७३ शृवन्द्योरारुः । | |
| | १७४ भियः क्रुक्लुकनौ । (३) | |
| | १७५ स्थेश-भास-पिस-कसो वरच् । | वरच् १७६ |
| वरच् | १७६ यश्च यङः । | |
| | १७७ भ्राज-भास-धुर्विद्युतोर्जि-पॄ-जु-ग्रावस्तुवः क्विप् । | क्विप् १७९ |
| क्विप् | १७८ अन्येभ्योऽपि दृश्यते । (४) | |
| क्विप् | १७९ भुवः संज्ञान्तरयोः । | भुवः १८० |
| भुवः | १८० वि-प्र-संभ्यो ड्वसंज्ञायाम् । (५) | |
| | १८१ धः कर्मणि ष्ट्रन् । | ष्ट्रन् १८३ |
| | १८२ दाम्नी-शस-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-दश-नहः करणे । | करणे १८६ |
| करणे, ष्ट्रन् | १८३ हलसूकरयोः पुवः । | |

---

१—(वा०) (क) किकिनावुत्सर्गश्छन्दसि सदादिभ्यो दर्शनात्। (ख) भाषायां धाञ्कृञ्सृजनिगमिभ्यः किकिनौ वक्तव्यौ। सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ।

२—(वा०) धृषेश्चेति वक्तव्यम्।

३—(वा०) क्रुकन्नपि वक्तव्यः।

४—(वा०) (क) क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च। (ख) द्युतिगमिजुहोतीनां द्वे च। (ग) ध्यायतेः सम्प्रसारणञ्च।

५—(वा०) डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानम्।

| | | |
|---|---|---|
| करणे | १८४ अर्ति-लू-धू-सू-खन-सह-चर इत्रः । | इत्रः १८६ |
| करणे, इत्रः | १८५ पुवः संज्ञायाम् । | पुवः १८६ |
| करणे, इत्रः, पुवः | १८६ कर्तरि चर्षिदेवतयोः । | |
| | १८७ ञीतः क्तः । | क्तः १८८ |
| क्तः | १८८ मति-बुद्धि-पूजार्थेभ्यश्च । | |

इति तृतीयाध्यायस्य द्वितीयः पादः ।

## अथ तृतीयः पादः

| | | |
|---|---|---|
| | १ उणादयो बहुलम् । | उणादयः ३ |
| उणादयः | २ भूतेऽपि दृश्यन्ते । | |
| | (भविष्यत्कालिककृत्प्रत्यय—) | |
| " | ३ भविष्यति गम्यादयः । (१) | भविष्यति १५ |
| भविष्यति | ४ यावत्पुरानिपातयोर्लट् । | लट् ९ |
| भवि-ति, लट् | ५ विभाषा कदाकर्ह्योः । | विभाषा ९ |
| भवि-ति, विभाषा, लट् | ६ किंवृत्ते लिप्सायाम् । | |
| " " " | ७ लिप्स्यमानसिद्धौ च । | |
| " " " | ८ लोडर्थलक्षणे च । | लो-णे ९ |
| लोड्-णे, भवि-ति, वा, लट् | ९ लिङ् चोर्ध्वमौहूर्तिके । | |
| भविष्यति | १० तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् । | क्रिया-म् १३, क्रियायाम् १३ |

१—(वा०) अनद्यतन उपसंख्यानम् ।

क्रि-याम्,भवि-ति ११ भाववचनाश्च ।

" " १२ अण् कर्मणि च ।

" " १३ लृट् शेषे च ।

भविष्यति १४ लृटः सद्वा ।

भविष्यति १५ अनद्यतने लुट् । (१)

(घञ्प्रत्यय—)

१६ पद-रुज-विश-स्पृशो घञ् । (२) घञ् ५५

घञ १७ सृ स्थिरे । (३)

(भावार्थकप्रत्यय—तत्र घञ् प्रकृतः)

" १८ भावे ।* भावे ११२

" १९ अकर्तरि च कारके संज्ञायाम् ।* अक-म् ११२

" २० परिमाणाख्यायां सर्वेभ्यः । (४)

" २१ इङश्च । (५)

" २२ उपसर्गे रुवः ।

" २३ समि यु-द्रु-दुवः ।

" २४ श्रि-णी-भुवोऽनुपसर्गे ।

" २५ वौ क्षु-श्रुवः ।

" २६ अवोदोर्नियः ।

---

१—(वा०) परिदेवने श्वस्तनी भविष्यदर्थे वक्तव्या ।

२—(वा०) स्पृश उपताप इति वक्तव्यम् ।

३—(वा०) व्याधिमत्स्यबलेष्विति वक्तव्यम् ।

४—(वा०) दारजारौ कर्तरि णिलुक् च ।

५—(वा०) (क) अपादाने स्त्रियामुपसंख्यानम् तदन्ताच्च वा ङीष् । (ख) शॄवायुवर्णनिवृत्तेषु ।

*प्रतिसूत्रमनयोरनुवृत्तिर्न दर्शिता ।

| | | |
|---|---|---|
| घञ् | २७ प्रे द्रु-स्तु-स्रुवः । | |
| " | २८ निरभ्योः पूल्वोः । | |
| " | २९ उन्न्योर्ग्रः । | उन्न्योः ३० |
| " उन्न्योः | ३० कॄ धान्ये । | |
| " | ३१ यज्ञे समि स्तुवः । | |
| " | ३२ प्रे स्त्रोऽयज्ञे । | स्त्रः ३४ |
| घञ्, स्त्रः | ३३ प्रथने वावशब्दे । | वौ ३४ |
| वौ, स्त्रः, घञ् | ३४ छन्दोनाम्नि च । | |
| घञ् | ३५ उदि ग्रहः । (१) | ग्रहः ३६ |
| ग्रहः, घञ् | ३६ समि मुष्टौ । | |
| घञ् | ३७ परिन्योर्नीणोर्द्यूताभ्रेषयोः । | |
| " | ३८ परावनुपात्यय इणः । | |
| " | ३९ व्युपयोः शेतेः पर्याये । | |
| " | ४० हस्तादाने चेरस्तेये । (२) | चेः ४२ |
| चेः, घञ् | ४१ निवास-चिति-शरीरोपसमाधानेष्वादेश्च कः । | आदेश्चकः ४२ |
| चेः, घञ्, आ-कः | ४२ संघे चानौत्तराधर्ये । | |
| | ४३ कर्मव्यतिहारे णच् स्त्रियाम् । | |
| | ४४ अभिविधौ भाव इनुण् । | ग्रहः ४७ |
| घञ् | ४५ आक्रोशेऽवन्योर्ग्रहः । | |
| ग्रहः, घञ् | ४६ प्रे लिप्सायाम् । | |

---

१—(वा०) उद्ग्राभनिग्राभौ च छन्दसि स्रुगुद्यमननिपातनयोः ।*
२—(वा०) उच्चयस्य प्रतिषेधो वक्तव्यः ।

* 'छन्दसि निपूर्वादपीष्यते स्रुगुद्यमननिपातनयोः' इति काशिकास्थः पाठः ।

| | | |
|---|---|---|
| ग्रहः, घञ् | ४७ परौ यज्ञे । | |
| ” | ४८ नौ वृ धान्ये । | |
| ” | ४९ उदि श्रयति-यौति-पू-द्रुवः । | |
| घञ् | ५० विभाषाऽऽङि रुप्लुवोः । | विभाषा ५५ |
| विभाषा, घञ् | ५१ अवे ग्रहो वर्षप्रतिबन्धे । | ग्रहः ५३ |
| वि-षा, ग्रहः, घञ् | ५२ प्रे वणिजाम् । | प्रे ५४ |
| प्रे, विभाषा, ग्रहः, घञ् | ५३ रश्मौ च । | |
| प्रे, विभाषा, घञ् | ५४ वृणोतेराच्छादने । | |
| विभाषा, घञ् | ५५ परौ भुवोऽवज्ञाने । | |
| | (अच्प्रत्यय—) | |
| भावे | ५६ एरच् । (१) | |
| | (अप्प्रत्यय—) | |
| भावे | ५७ ऋदोरप् । | अप् ८७ |
| अप् | ५८ ग्रह-वृ-दृ-निश्चि-गमश्च । (२) | |
| अप् | ५९ उपसर्गेऽदः । | अदः ६० |
| अदः अप् | ६० नौ ण च । | |
| अप् | ६१ व्यध-जपोरनुपसर्गे । | अनुपसर्गे ६५ |
| अनुपसर्गे अप् | ६२ स्वन-हसोर्वा । | वा ६५ |
| वा, अप्, अ-र्गे | ६३ यमः समुपनिविषु च । | |
| वा, अप्, अ-र्गे | ६४ नौ गद-नद-पठ-स्वनः । | नौ ६५ |

१—(वा०) (क) अज्विधौ भयादीनामुपसंख्यानम् नपुंसके क्तादि-निवृत्यर्थम् । (ख) जवसवौ छन्दसि वक्तव्यौ ।

२—(वा०) (क) वशिरण्योरुपसंख्यानम् । (ख) घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् ।

| | | |
|---|---|---|
| वा, अप् | ६५ क्वणो वीणायाञ्च। | |
| अप् | ६६ नित्यं पणः परिमाणे। | |
| अप् | ६७ मदोऽनुपसर्गे। | |
| | ६८ प्रमद-संमदौ हर्षे। | |
| अप् | ६९ समुदोरजः पशुषु। | |
| ,, | ७० अक्षेषु ग्लहः। | |
| ,, | ७१ प्रजने सर्त्तेः। | |
| ,, | ७२ ह्वः सम्प्रसारणं च न्यभ्युपविषु। | ह्वः ७५, संप्रसारणम् ७५ |
| ह्वः, अप्, स-म् | ७३ आङि युद्धे। | |
| | ७४ निपानमाहावः। | |
| ह्वः, अप्, स-म् | ७५ भावेऽनुपसर्गस्य। | भावे, अ-स्य ७६ |
| अ-स्य, अप् | ७६ हनश्च वधः। | हनः ८७ |
| | ७७ मूर्तौ घनः | |
| | ७८ अन्तर्घनो देशे। | |
| | ७९ अगारैकदेशे प्रघणः प्रघाणश्च। | |
| | ८० उद्घनोऽत्याधानम्। | |
| | ८१ अपघनोऽङ्गम्। | |
| हनः, अप् | ८२ करणेऽयोविद्रुषु। | करणे ८४ |
| हनः, करणे, अप् | ८३ स्तम्बे क च। | |
| ,, ,, ,, | ८४ परौ घः। | |
| | ८५ उपघ्न आश्रये। | |
| | ८६ संघोद्घौ गणप्रशंसयोः। | |
| | ८७ निघो निमितम्। | |
| भावे | ८८ ड्वितः क्त्रिः। | |

| | | |
|---|---|---|
| भावे | ८९ **द्वितोऽथुच्।** | |
| ,, | ९० **यज-याच-यत-विच्छ-प्रच्छ-रक्षो नङ्।** | |
| ,, | ९१ **स्वपो नन्।** | |
| ,, | ९२ **उपसर्गे घोः किः।** | घोः किः ९३ |
| घोः, किः | ९३ **कर्मण्यधिकरणे च।** | |
| भावे | ९४ **स्त्रियां क्तिन्। (१)** | स्त्रियाम् ११२<br>क्तिन् ९७ |
| क्तिन् | ९५ **स्था-गा-पा-पचो भावे।** | भावे ९६ |
| क्तिन्, भावे | ९६ **मन्त्रे वृषेष-पच-मन-विद्-भू-वी-राः उदात्तः।** | उदात्तः १०० |
| ,, , ,, | ९७ **ऊति-यूति-जूति-साति-हेति-कीर्तयश्च।** | |
| | ९८ **व्रजयजोर्भावे क्यप्।** | क्यप् १०० |
| क्यप्, भावे | ९९ **संज्ञायां समज-निषद्-निपत-मन-विद्-सुञ्-शीङ्-भृञिणः।** | |
| क्यप्, भावे | १०० **कृञः श च।** | श १०१ |
| | १०१ **इच्छा। (२)** | |
| स्त्रियाम् | १०२ **अ प्रत्ययात्।** | |

---

१—(वा०) (क) स्त्रियां क्तिन्नाबादिभ्यः। (ख) श्रुयजिस्तुभ्यः* करणे। (ग) ग्लाम्लाज्याहाभ्यो निः। (घ) ऋकारल्वादिभ्यः क्तिन्निष्ठावद्भवतीति वक्तव्यम्। (ङ) संपदादिभ्यः क्विप्।

२—(वा०) (क) इच्छापरिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्। जागर्तेरकारो वा।

---

* श्रुयजिषि। इति पाठान्तरम्। श्रुयजीषि इति च पा०।

| | | | |
|---|---|---|---|
| स्त्रियाम्, अ | १०३ | गुरोश्च हलः । | |
| स्त्रियाम् | १०४ | षिद्भिदादिभ्योऽङ् । | अङ् १०६ |
| स्त्रियाम्, अङ् | १०५ | चिन्ति-पूजि-कथि-कुम्बि-चर्चश्च । | |
| ” , ” | १०६ | आतश्चोपसर्गे । | |
| स्त्रियाम् | १०७ | ण्यासश्रन्थो युच् । (१) | |
| ” | १०८ | रोगाख्यायां ण्वुल् बहुलम् । (२) | ण्वुल् ११० |
| ” , ण्वुल् | १०९ | संज्ञायाम् । | |
| ” , ” | ११० | विभाषाख्यान-परिप्रश्नयोरिञ्च । | |
| विभाषा,स्त्रि-म् | १११ | पर्यायार्हर्णोत्पत्तिषु ण्वुच् । | |
| स्त्रियाम् | ११२ | आक्रोशे नञ्यनिः । | |
| | ११३ | कृत्यल्युटो बहुलम् । | |
| | ११४ | नपुंसके भावे क्तः । | न-के,भावे ११६ |
| न-के, भावे | ११५ | ल्युट् च । | ल्युट् ११७ |
| ” ” , ल्युट्, | ११६ | कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम् । | |
| ल्युट् | ११७ | करणाधिकरणयोश्च । | क-योः १२५ |
| कर-योः | ११८ | पुंसि संज्ञायां घः प्रायेण । | पुंसि संज्ञाम् १२५, घः ११९ |

---

१—(वा०) (क) घट्टिवन्दिविदिभ्य उपसंख्यानम् । (ख) इषेरनिच्छार्थस्य युज्वक्तव्यः । (ग) परेर्वा ।

२—(वा०) (क) धात्वर्थनिर्देशे ण्वुल्वक्तव्यः । (ख) इक्श्तिपौ धातुनिर्देशे । (ग) वर्णात्कारः । (घ) रादिफः । (ङ) मत्वर्थाच्छः । (च) इणजादिभ्यः । (छ) इञ्वपादिभ्यः । (ज) इक् कृष्यादिभ्यः ।

## अथ द्वितीयः पादः

१ धान्यानां भवने क्षेत्रे खञ् । भ-ने क्षेत्रे ४

भवने क्षेत्रे २ व्रीहिशाल्योर्ढक् ।

,, ३ यव-यवक-षष्टिकाद्यत् । यत् ४

,, यत् ४ विभाषा तिल-माषोमा-भङ्गाणुभ्यः ।

५ सर्वचर्मणः कृतः खखञौ ।

६ यथामुख-संमुखस्य दर्शनःखः । खः १५

खः ७ तत्सर्वादेः पथ्यङ्ग-कर्म-पत्र-पात्रं व्याप्नोति । तद् १७

तद्, खः ८ आप्रपदं प्राप्नोति ।

,, ,, ९ अनुपद-सर्वान्नायानयं बद्धा-भक्षयति-नेयेषु ।

,, ,, १० परोवर-परम्पर-पुत्रपौत्रमनुभवति ।

,, ,, ११ अवारपारात्यन्तानुकामं गामी । (१)

खः १२ समांसमां विजायते । (२) विजायते १३

खः विजायते १३ अद्यश्वीनावष्टब्धे ।

खः १४ आगवीनः ।

खः १५ अनुग्वलंगामी । अलङ्गामी १७

---

१—(वा०) (क) विपरीताच्च । (ख) विगृहीतादपीष्यते ।

२—(वा०) (क) पूर्वपदस्य यलोपवचनम् । (ख) अनुत्पत्ताबुत्तरपदस्य च वा वचनम् ।

| | | |
|---|---|---|
| तद्, अलङ्गामी | १६ अध्वनो यत्खौ। | यत्खौ १७ |
| ,, ,, यत्खौ | १७ अभ्यमित्राच्छ च। | |
| | १८ गोष्ठात् खञ् भूतपूर्वे। | खञ् २३ |
| खञ् | १९ अश्वस्यैकाहगमः। | |
| ,, | २० शालीन-कौपीने अधृष्टाकार्ययोः। | |
| ,, | २१ व्रातेन जीवति | |
| ,, | २२ साप्तपदीनं सख्यम्। | |
| ,, | २३ हैयङ्गवीनं संज्ञायाम्। | |
| ,, | २४ तस्य पाकमूले पील्वादि-कर्णादिभ्यः कुणब्जाहचौ। (१) | तस्य मूलम् २५ |
| तस्य, मूलम् | २५ पक्षात्तिः। | |
| | २६ तेन वित्तश्चुञ्चुप्-चणपौ। | |
| | २७ वि-नञ्भ्यां नानाञौ न सह। | |
| | २८ वेः शालच्छङ्कटचौ। | वेः २९ |
| वेः | २९ संप्रोदश्च कटच्।(२) | कटच् ३० |
| कटच् | ३० अवात् कुटारच्च। | अवात् ३१ |

---

१—(गणपा०) पीलु, कर्कन्धु, (कर्कन्धू) शमी, करीर, कुवल (बल), बदर, अश्वत्थ, खदिर, इति पील्वादिः।

कर्ण, अक्षि, नख, मुख, केश, पाद, गुल्फ, भ्रू, भृङ्ग (भ्रूभङ्ग), दन्त, ओष्ठ, पृष्ठ, मख, अङ्गुष्ठ, इति कर्णादिः।

२—(वा०) (क) कटच्प्रकरणेऽलाबूतिलोमाभ्यो रजस्युपसंख्यानम्। (ख) भङ्गायाश्च। (ग) गोष्ठादयः स्थानादिषु पशुनामादिभ्य उपसंख्यानम्। (घ) संघे कटज् वक्तव्यः। (ङ) विस्तारे पटज्वक्तव्यः। (च) द्वित्वे गोयुगच्। (छ) प्रकृत्यर्थस्य षट्त्वे षड्गवच्। (ज) विकारे स्नेहने तैलच् (झ) संभवने क्षेत्रे शाकटशब्दश्च प्रत्ययो वक्तव्यः (ञ) शाकिनशब्दश्च प्रत्ययो वक्तव्यः।

| | | |
|---|---|---|
| अवात् | ३१ नते नासिकायाः संज्ञायां टीटञ्-नाटञ्-भ्रटचः । | न-याः ३३, स-म् ३४ |
| न-याः, सञ्ज्ञायाम् | ३२ नेर्बिडज् बिरीसचौ । | नेः ३३ |
| नेः, न-याः, स-म् | ३३ इनच्-पिटच्-चिक-चिच । (१) | |
| सञ्ज्ञायाम् | ३४ उपाधिभ्यां त्यकन्नासन्नारूढयोः । | |
| | ३५ कर्मणि घटोऽठच् । | |
| | ३६ तदस्य संजातं तारकादिभ्य इतच् । (२) | त-स्य ३८ |
| तदस्य | ३७ प्रमाणे द्वयसज्-दघ्नञ्-मात्रचः । (३) | प्र-णे द्व-चः ३८ |

---

१—(वा०) (क) इनच्पिटच्काः चिकचिचिकादेशाश्च वक्तव्याः। (ख) क्लिन्नस्य चिल्पिल्लश्चास्य चक्षुषी। (ग) चुलादेशो वक्तव्यः।

२—(गणपा०) तारका, पुष्प, कर्णक, मंजरी, ऋजीष, क्षण, सूच, (सूचक का०), मूत्र, निष्क्रमण, पुरीष, उच्चार, प्रचार, विचार, कुड्मल, (कड्मल), कण्टक, मुसल, मुकुल,कुसुम, कुतूहल, स्तवक (स्तबक), किसलय, पल्लव, खण्ड, वेग, निद्रा, मुद्रा, बुभुक्षा, धेनुष्या, पिपासा, श्रद्धा, अभ्र, पुलक, अंगारक, वर्णक, द्रोह, दोह, सुख, दुःख, उत्कण्ठा, (उत्कण्ठ का०), भर, व्याधि, वर्मन्, व्रण, गौरव, शास्त्र, तरंग, तिलक, चन्द्रक, (चन्द्र का०), अन्धकार, गर्व, मुकुर, (कुमुर), हर्ष, उत्कर्ष, रण, कुवलय, गर्ध, क्षुध् (क्षुधा का०), सीमन्त, ज्वर, गर, रोग, रोमाञ्च, पण्डा, कज्जल, तृष्, कोरक, कल्लोल, स्थपुट, फल, कंचुक, शृंगार, अंकुर, शैवल, बकुल, श्वभ्र, आराल, कलंक, कर्दम, कन्दल, मूर्छा, अंगार, हस्तक, (हस्त का०), प्रतिबिम्ब, विघ्न-तन्त्र (विघ्न, तन्त्र), प्रत्यय, दीक्षा, गर्ज, गर्भादप्राणिनि । तन्द्रा, स्तवक, कर, आन्दोल, गोर, राग । आकृतिगणः, इति तारकादिः।

३—(वा०) (क) प्रमाणे लो वक्तव्यः। (ख) द्विगोर्नित्यम्। (ग) डट् स्तोमे वक्तव्यः (घ) शच्छनोर्डिनिर्वक्तव्यः। (ङ) विंशतेश्चेति वक्तव्यः। (च) प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज्वक्तव्यः। (छ) वत्वन्तात् स्वार्थे द्वयसज्मात्रचौ बहुलम्।

| | | |
|---|---|---|
| त-स्य प्रमाणे द्व-चः | ३८ पुरुषहस्तिभ्यामण् च । | |
| त-स्य | ३९ यत्तदेतेभ्यः परिमाणे वतुप् । (१) | वतुप् ४१ |
| वतुपः | ४० किमिदंभ्यां वो घः । | वो घः ४१ |
| तदस्य,वतुप्,वोघः | ४१ किमः संख्यापरिमाणे डति च । | |
| ,, | ४२ संख्याया अवयवे तयप् । | |
| | ४३ द्वित्रिभ्यां तयस्यायज्वा । | तयस्या यच ४४ |
| तय-च् | ४४ उभादुदात्तो नित्यम् | |

(अथ मत्वर्थीयप्रत्यय—)

| | | |
|---|---|---|
| | ४५ तदस्मिन्नधिकमिति दशान्ताड्डः । | तदस्मि-कम् ४६ डः ४६ |
| तद-म्, डः | ४६ शदन्तविंशतेश्च । (२) | |
| तदस्य | ४७ संख्याया गुणस्य निमाने मयट् । | |
| | ४८ तस्य पूरणे डट् । | डट् ५३,त-णे ५८ |
| डटः | ४९ नान्तादसंख्यादेर्मट् । | ना-त् ५० |
| ना-त्, डटः, मट् | ५० थट् च छन्दसि । | |
| डटि | ५१ षट्-कति-कतिपय-चतुरां थुक् । (३) | |
| ,, | ५२ बहु-पूग-गण-संघस्य तिथुक् । | |
| ,, | ५३ वतोरिथुक् । | |

---

१—(वा०) वतुप्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् ।

२—(वा०) (क) शतग्रहणंऽन्तग्रहणं प्रत्ययग्रहणे यस्मात्स तदादेरधिकार्थम् । (ख) संख्याग्रहणं च कर्तव्यम् ।

३—(वा०) चतुरश्छयतावाद्यक्षरलोपश्च ।

| | | |
|---|---|---|
| तस्य पूरणे | ५४ द्वेस्तीयः । | तीयः ५५ |
| तीयः त-णे | ५५ त्रेः सम्प्रसारणञ्च । | |
| डटः | ५६ विंशत्यादिभ्यस्तमडन्यतरस्याम् । | तमट् ५८ |
| " तमट् | ५७ नित्यं शतादि-मासार्ध-मास-संवत्सराच्च । | |
| " " | ५८ षष्ट्यादेश्चासंख्यादेः । | |
| | ५९ मतौ छः सूक्तसाम्नोः । | मतौ, छः ६२ |
| मतौ, छस्य | ६० अध्यायानुवाकयोर्लुक् । | अ-योः ६२ |
| मतौ अ-योः | ६१ विमुक्तादिभ्योऽण् । (१) | |
| मतौ, अ-योः | ६२ गोषदादिभ्यो वुन् । (२) | वुन् ६३ |
| वुन् | ६३ तत्र कुशलः पथः । | तत्र ६७, कुशलः ६४ |
| तत्र, कुशलः | ६४ आकर्षादिभ्यः* कन् । (३) | कन् ८२ |

१—(गणपा०) विमुक्त, देवासुर, रक्षोऽसुर, उपसद, सुवर्ण (सुपर्ण का०), परिसारक (परिषादक का०), सदसत्, वसु, मरुत् (मरुत्वत् का०), पत्नीवत्, वसुमत्, महीयत्व (महीयल का०), सत्वत्, वर्हवत्, दशार्ण, दशार्ह, वयस् (दशार्हपयस् का०), हविर्धान, पतत्रिन्, पतत्रि का०), महित्री, अस्यहत्य, सोमापूषन्, इडा, अग्नाविष्णु (अग्नाविष्णू का०), उर्वशी, वृत्रहन् (वृत्रहति का०), मित्री, सोम, हेतु, इति विमुक्तादिः।

२—(गणपा०) गोषद् (गोषद का०), इषेत्वा (इषेत्व का०), मातरिश्वन्, देवस्यत्वा, देवीरापः, कृष्णोऽस्या खरेष्ठः, देवीं (देवीं का०), धिय धिया (धियस् का०), रक्षोहण, युञ्जान, अञ्जान, प्रभूत, प्रतूर्त, कृशानु (कृशाकु का०), वृशान, सहस्रशीर्षा, वातस्य ते, कृशाश्व, स्वाहाप्राण, प्रसुप्त, इति गोषदादिः।

३—(गणपा०) आकर्ष (आकष), त्सरु, पिशाच, (पिपासा का०), पिचण्ड, अशमिड, अश्मन्, निचय, (विचय का०), चय, विजय, जय, आचय, नय, पाद (निपाद का०') दीप, ह्रद, ह्लाद, ह्लाद, गद्गद्, शकुनि, अय, इत्याकर्षादिः।

*'आकषादिभ्य' इति पा०।

| | | |
|---|---|---|
| ,, कन् | ६५ धन-हिरण्यात्कामे । | |
| ,, ,, | ६६ स्वाङ्गेभ्यः प्रसिते । | प्रसिते ६७ |
| ,, प्र-ते | ६७ उदराट्ठगाद्यूने । | |
| कन् | ६८ सस्येन परिजातः । | |
| ,, | ६९ अंशं हारी । | |
| ,, | ७० तन्त्रादचिरापहृते । | |
| ,, | ७१ ब्राह्मणकोष्णिके संज्ञायाम् । | |
| ,, | ७२ शीतोष्णाभ्यां कारिणि । | |
| ,, | ७३ अधिकम् । | |
| कन् | ७४ अनुकाभिकाभीकः कमिता । | |
| ,, | ७५ पार्श्वेनान्विच्छति । | अन्विच्छति ७६ |
| अ-ति | ७६ अयःशूल-दण्डाजिनाभ्यां ठक्-ठञौ । | |
| कन् | ७७ तावतिथं ग्रहणमिति लुग्वा।(१) | |
| ,, | ७८ स एषां ग्रामणीः । | |
| ,, | ७९ शृंखलमस्य बन्धनं करभे । | |
| ,, | ८० उत्क उन्मनाः । | |
| ,, | ८१ कालप्रयोजनाद्रोगे । | |
| ,, | ८२ तदस्मिन्नन्नं प्राये संज्ञायाम् ।(२) | तद-प्रायेसं-म् ८३ |
| तद-म्, प्राये, स-म् | ८३ कुल्माषादञ् । | |
| | ८४ श्रोत्रियँश्छन्दोऽधीते । | |
| | ८५ श्राद्धमनेन भुक्तमिनि-ठनौ । | अनेन ८८ |

१—(वा०) तावतिथेन गृह्णातीति लुक् च।
२—(वा०) प्राये संज्ञायां वटकेभ्य इनिर्वक्तव्यः।

| | | |
|---|---|---|
| अनेन | ८६ पूर्वादिनिः । | पू-त् ८७ इनिः ६१ |
| अनेन पू-त् इनिः | ८७ सपूर्वाच्च । | |
| अनेन, इनिः | ८८ इष्टादिभ्यश्च । (१) | |
| इनिः | ८९ छन्दसि परिपन्थि-परिपरिणौ पर्यवस्थातरि । | |
| ,, | ९० अनुपद्यन्वेष्टा । | |
| ,, | ९१ साक्षाद् द्रष्टरि संज्ञायाम् । | |
| | ९२ क्षेत्रियच् परक्षेत्रे चिकित्स्यः । | |
| | ९३ इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा । | |
| | ९४ तदस्यास्त्यस्मिन्निति मतुप् । (२) | तद-न् मतुप् १४० |
| तद-न् मतुप् | ९५ रसादिभ्यश्च । (३) | |
| मत्वर्थे | ९६ प्राणिस्थादातो लजन्यतरस्याम् । | लच्, अ-म् ९९ |

---

१—(गणपा०) इष्ट, पूर्त, उपासादित, (उपसादित का०), निगदित, परिगदित, परिवादित, निकथित, निषादित, निपठित, संकलित, परिकलित, संरक्षित, परिरक्षित, अर्चित, गणित, अवकीर्ण, आयुक्त, गृहीत, आम्नात, श्रुत, (आम्नातश्रुत का०), अधीत (अवधान का०), आसेवित, अवधारित, अवकल्पित, निराकृत, उपकृत, उपाकृत, अनुयुक्त, अनुगणित, अनुपठित, व्याकुलित, परिकथित, संकल्पित, विकलित, निपतित, पठित, पूजित, परिगणित, उपगणित, परित, (!) अपवारित, उपनत, निगृहीत, अपचित। इतीष्टादिः।

२—(वा०) गुणवचनेभ्यो मतुपो लुग्वक्तव्यः।

३—(गणपा०) रस, रूप, वर्ण, गन्ध, स्पर्श, शब्द, स्नेह, भाव, गुणात् (गुणग्रहणं रसादीनां विशेषणम्) एकाचः (स्ववत का०), इति रसादिः।

मत्वर्थे, लच्, वा ९७ सिध्मादिभ्यश्च। (१)

मत्वर्थे, लच् ९८ वत्सांसाभ्यां कामबले।

,, लच्, अ-म् ९९ फेनादिलच्च।

मत्वर्थे १०० लोमादि-पामादि-पिच्छादिभ्यः शनेलचः। (२)

,, १०१ प्रज्ञा-श्रद्धार्चाभ्यो णः। (३)

,, १०२ तपःसहस्राभ्यां विनीनी। तपः-म् १०३

तपः-म्, मत्वर्थे १०३ अण् च। (४) अण् १०५

---

१—(गणपा०) सिध्म, गडु, मणि, नाभि, बीज (जीव का०), वीणा, कृष्ण, निष्पाव, पांसु, पार्श्व, परशु (पर्शू) हनु, सक्तु, मांस, पांसुधमन्योर्दीर्घश्च (पार्ष्णील, धमनील का०), वातदन्तबलललाटानामूङ्च (वात—ललाटगलानामूङ्च का०) बातूल, दन्तूल, बलूल, ललाटूल, गलूल, का०), जटाघटाकटाकालाः क्षेपे। पर्ण, उदक, प्रज्ञा, सक्ष्कि, (सर्ष्कि, सक्थि का०), कर्ण, स्नेह, शीत, श्याम, पिङ्ग, पित्त, पुष्क (शुष्क का०), पृथु, मृदु, मञ्जु, मण्ड, पत्र, चटु, कपि, गण्डु, (कण्डु का०) ग्रन्थि, श्री, कुश, धारा, वर्ष्मन्, पक्ष्मन्, श्लेष्मन्, पेश, निष्पाद, कुण्ड, क्षुद्रजन्तूपतापयोश्च (तापाच्चेष्यते-यूकालः, मक्षिकालः, उपतापाच्च—विर्चाचकालः, विपादिकालः, मूर्छालः का०), गण्ड संज्ञा। इति सिध्मादिः।

२—(गणपा०) लोमन्, रोमन्, बभ्रु, हरि, गिरि कर्क, कपि, मुनि, तरु, इति लोमादिः।

पामन्, वामन्, वेमन्, हेमन्, श्लेष्मन्, कद्रू (कद्रु) वलि, सामन्, ऊष्मन्, कृमि, अङ्गात् कल्याणे, शाकीपलालीदद्रूणां ह्रस्वत्वं च। विश्वगित्युत्तरपदलोपश्चाकृतसन्धेः (विषुण), लक्ष्म्या अच्च (लक्ष्मणः) श्रेष्ठ, पलल। इति पामादिः।

पिच्छा (पिच्छ का०), उरस्, धुवक (क्षुवक का०), ध्रुवक (ध्रुवका का०), जटाघटाकालाः (कालात् का०) क्षेपे, वर्ण उदक, पंक, प्रज्ञा। इति पिच्छादिः।

३—(वा०) वृत्तेश्च।

४—(वा०) अण्प्रकरणे ज्योत्स्नादिभ्य उपसंख्यानम्।

मत्व,र्थे अण् १०४ सिकता-शर्कराभ्याञ्च । सि-म् १०५

,, सि-म् १०५ देशे लुबिलचौ च ।

मत्वर्थे १०६ दन्त उन्नत उरच् ।

,, १०७ ऊष-सुषि-मुष्क-मधो रः । (१)

,, १०८ द्युद्रुभ्यां मः ।

,, १०९ केशाद्वोऽन्यतरस्याम् । (२) वः ११०

,, वः ११० गाण्ड्यजगात्संज्ञायाम् ।

,, १११ काण्डाण्डादीरन्नीरचौ ।

,, ११२ रजः-कृष्यासुति-परिषदो वलच् । (३) वलच् ११३

,, वलच् ११३ दन्त-शिखात्संज्ञायाम् । सञ्ज्ञायाम् ११४

११४ ज्योत्स्ना-तमिस्रा-शृङ्गिणोर्जस्विन्नूर्जस्वल-गोमिन्-मलिन-मलीमसाः ।

,, ११५ अत इनिठनौ । इ-नौ ११७

मत्वर्थे, इ-नौ ११६ व्रीह्यादिभ्यश्च । (४)

---

१—(वा०) (क) रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् । (ख) नगाच्च ।+

२—(वा०) (क) 'वप्रकरणे मणिहिरण्याभ्यामुपसंख्यानम्'* (ख) छन्दसीवनिपौच । (ग) मेधारथाभ्यामिरन्निरचौ वक्तव्यौ ।

३—(वा०) वलच्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम् ।

**४—(गणपा०) व्रीहि, माया, शाला, (शालि का०), शिखा, माला, मेखला, केका, अष्टका, पताका, चर्मन्, कर्मन्, वर्मन्, दंष्ट्रा, संज्ञा, बडवा, कुमारी, नौ, वीणा, वलाका, यवखद (यवखदनौ), शीर्षान्नञः । हंसा, इति व्रीह्यादिः ।**

---

+ नगपांसुपाण्डुभ्यश्चेतिवक्तव्यम् । इति काशिका । कच्छ्रा ह्रस्वत्वंच इति काशिका ।

* वप्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम् । इति पाठान्तरम् ।

| | | |
|---|---|---|
| म-र्थे, इ-नौ | ११७ तुन्दादिभ्य इलच् च। (१) | |
| ,, | ११८ एकगोपूर्वाट् ठञ् नित्यम् | ठञ् ११९ |
| ,, ठञ् | ११९ शतसहस्रान्ताच्च निष्कात्। | |
| ,, | १२० रूपादाहत-प्रशंसयोर्यप्। (२) | |
| ,, | १२१ अस्माया-मेधा-स्रजो विनिः। | विनिः १२२ |
| ,, विनिः | १२२ बहुलं छन्दसि। (३) | |
| मत्वर्थे | १२३ ऊर्णाया युस्। | |
| ,, | १२४ वाचो ग्मिनिः। | वाचः १२५ |
| ,, वाचः | १२५ आलजाटचौ बहुभाषिणि। (४) | |
| | १२६ स्वामिन्नैश्वर्ये। | |
| ,, | १२७ अर्शआदिभ्योऽच्। (५) | |
| ,, | १२८ द्वन्द्वोपताप-गर्ह्यात् प्राणिस्थादिनिः। | इनिः १३७ |

---

१—(गणपा०) तुन्द, उदर, पिचण्ड, यव, व्रीहि। स्वाङ्गाद्विवृद्धौ (च का०), घट, इति तुन्दादिः।

२—(वा०) यप्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम्।

३—(वा०) (क) छन्दोविन्प्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्च। (ख) मर्मणश्चेति वक्तव्यम्।* (ग) सर्वत्रामयस्योपसंख्यानम्। (घ) शृङ्ग-वृन्दाभ्यामारकन्वक्तव्यः। (ङ) फलबर्हाभ्यामिनज् वक्तव्यः। (च) हृदयाच्चालुरन्यतरस्याम्। (छ) शीतोष्णतृप्रेभ्यस्तन्न सहत इत्यालुज्वक्तव्यः। (ज) हिमाच्चेलुः। (झ) बलाच्चोलः। (ञ) वातात्समूहे च। (ट) तप् पर्वमरुद्भ्यां वक्तव्यः।

४—(वा०) कुत्सित इति वक्तव्यम्।

५—(गणपा०) अर्शन्, उरस्, तुन्द, चतुर, पलित, जटा, घटा, घाटा, अघ (अभ्र का०), कर्दम, अम्ल (आम का०), लवण, स्वाङ्गाद्धीनात्, वर्णात्। आकृतिगणः। इत्यर्शआदिः।

---

* वार्तिकमिदं क्वचिन्न दृश्यते।

मत्वर्थे इनिः　१२९ वातातीसाराभ्यां कुक् च । (१)

,, ,,　१३० वयसि पूरणात् ।

,, ,,　१३१ सुखादिभ्यश्च । (२)

१३२ धर्म-शील-वर्णान्ताच्च ।

,, ,,　१३३ हस्ताज्जातौ ।

,, ,,　१३४ वर्णाद् ब्रह्मचारिणि ।

मत्वर्थे, इनिः　१३५ पुष्करादिभ्यो देशे । (३)

,, इनिः　१३६ बलादिभ्यो मतुबन्यतरस्याम् । (४)

,, ,,　१३७ संज्ञायां मन्माभ्याम् ।

,,　१३८ कंशम्भ्यां बभयुस्तितुतयसः ।

,,　१३९ तुन्दि-वलि-वटेर्भः ।

,,　१४० अहं-शुभमोर्युस् ।

इति पञ्चमाध्यायस्य द्वितीयः पादः ।

---

१—(वा०) पिशाचाच्चेति वक्तव्यम् ।

२—(गणपा०) सुख, दुःख, तृप्त, कृच्छ्र, आश्र (आस्र, आस्र का०), अस्र, अलीक, करुण (करुणा का०), सोढ, प्रतीप, शील, हल, माला क्षेपे, कृपण, प्रमाण, (प्रणय), दल, कक्ष, इति सुखादिः ।

३—(वा०) (क) इनिप्रकरणे वलाद्बाहूरुपूर्वपदादुपसंख्यानम् । (ख) सर्वादेश्च । (ग) अर्थाच्चासन्निहिते । (घ) तदन्ताच्चेति वक्तव्यम् ।

(गणपा०) पुष्कर, पद्म, उत्पल, तमाल, कुमुद, नड, कपित्थ, बिस, मृणाल, कर्दम, शालूक, विगर्ह, करीष, शिरीष, यवास, प्रवाह, (प्रवास का०), हिरण्य, कैरव, कल्लोल, तट, तरंग, पङ्कज, सरोज, राजीव, नालीक, सरोरुह, पुटक, अरविन्द, अम्भोज, अब्ज, कमल, पयस्, वयस्, इति पुष्करादिः ।

४—(गणपा०) बल, उत्साह, उद्भास, (उद्भाव) उद्वास, उद्दास, शिखा, कुल, चूडा, सुल, कूल, आयाम, व्यायाम, उपयाम, आरोह, अवरोह, परिणाह, युद्ध, उद्दाम, शिखावल, वृगमूल, वंश, इति बलादिः ।

# अथ तृतीयः पादः

(अथ प्राग्दिशीयप्रत्यय—)

| | | |
|---|---|---|
| | १ प्राग्दिशो विभक्तिः। | वि-क्तिः २६ |
| प्राग्दिशः प्र-त्ययाः | २ किं-सर्वनाम-बहुभ्योऽद्व्या-दिभ्यः। (१) | |
| प्रा-येषु | ३ इदम इश्। | इ-मः ४ |
| ,, | ४ एतेतौ रथोः। | |
| ,, | ५ एतदोऽन्।* | |
| ,, | ६ सर्वस्य सोऽन्यतरस्यां दि। | |
| किंस-भ्यः | ७ पञ्चम्यास्तसिल्। | त-ल् ६ |
| तसिल् | ८ तसेश्च। | |
| ,, | ६ पर्यभिभ्यां च। | |
| किंस-भ्यः | १० सप्तम्यास्त्रल्। | स-म्याः २२ |
| स-म्याः | ११ इदमो हः। | |
| ,, | १२ किमोऽत्। | किमः |
| ,, किमः | १३ वा ह च च्छन्दसि। | |
| तसिलादयः | १४ इतराभ्योऽपि दृश्यन्ते। | |
| सप्तम्याः | १५ सर्वैकान्य-किं-यत्तदः काले दा। | काले २२ |
| ,, काले | १६ इदमोर्हिल्। | इदः १८ |
| | १७ अधुना। | |
| इ-मः, स-, काले | १८ दानीं च। | दानीम् १६ |

---

१—(वा०) बहुग्रहणे संख्याग्रहणम्।

* 'एतदोऽश्, इति पाठान्तरम्।

| | | |
|---|---|---|
| स-म्याः, काले, दानीम् | १९ तदो दा च । | |
| स-म्याः, काले | २० तयोर्दार्हिलौ च च्छन्दसि । | |
| स-म्याः, कि-भ्यः, काले | २१ अनद्यतने र्हिलन्यतरस्याम् । | |
| स-म्याः, काले | २२ सद्यः-परुत्-परार्यैषमः-परेद्यव्य द्य-पूर्वेद्युरन्येद्युरन्यतरेद्युरितरे द्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः। (१) | |
| कि-भ्यः | २३ प्रकारवचने थाल् । | प्र-ने २६ |
| प्र-ने | २४ इदमस्थमुः । | थमुः २५ |
| ,, , थमुः | २५ किमश्च । | किमः २६ |
| | (अथ प्रागिवीयप्रत्यय—) | |
| ,, , किमः | २६ था हेतौ च च्छन्दसि । | |
| | २७ दिक्शब्देभ्यः सप्तमी-पञ्चमी-प्रथमाभ्यो दिग्देशकालेष्व-स्तातिः । | सर्वंसूत्रमनुवर्तते ३८ |
| दि- षु, स-भ्यः | २८ दक्षिणोत्तराभ्यामतसुच् । | अ-च् २९ |
| अस्तातेरर्थे | २९ विभाषा परावराभ्याम् । | |
| दि-भ्यः,अस्तास्तेः | ३० अञ्चेर्लुक् । | |
| | ३१ उपर्युपरिष्टात् । | |
| | ३२ पश्चात् । (२) | |

---

१—(वा०) द्युश्चोभयाद्वक्तव्यः।

२—(वा०) (क) दिक्पूर्वपदस्यापरस्य पश्चभावो वक्तव्यः आतिश्च प्रत्ययः। (ख) अर्धोत्तरपदस्य च समासे*। (ग) अर्धे च।†

---

*अर्धोत्तरपदस्य दिक्पूर्वपदस्य पश्चभावो वक्तव्यः। इति पाठः।

†विनापि पूर्वपदस्य पश्चभावो वक्तव्यः। इति पाठः।

| | | |
|---|---|---|
| अ-रर्थे | ३३ पश्च पश्चा च च्छन्दसि । | |
| ,, | ३४ उत्तराधर-दक्षिणादातिः । | उ-त् ३५ |
| उ-त्, अ-रर्थे | ३५ एनबन्यतरस्यामदूरेऽपञ्चम्याः । | अ-म्याः ३८ |
| अपञ्चम्याः ,, | ३६ दक्षिणादाच् । | द-त् ३७, आच् ३८ |
| ,, ,, | ३७ आहि च दूरे । | आहि, दूरे ३८ |
| ,, ,, | ३८ उत्तराच्च । | |
| अ-रर्थे | ३९ पूर्वाधरावराणामसि पुरधवश्चैषाम् । | पू-म् ४०<br>पु-वः ४० |
| पू-म्, पु-वः | ४० अस्ताति च । | अ-ति ४१ |
| अ-ति, अव् | ४१ विभाषाऽवरस्य । | |
| | ४२ संख्याया विधार्थे धा । | स-याः, धा ४३ |
| सं-याः, धा | ४३ अधिकरणविचाले च । | |
| | ४४ एकाद्धो ध्यमुञन्यतरस्याम् । | धः ४६, अ-म् ४६ |
| धः, अ-म् | ४५ द्वित्र्योश्च धमुञ् । (१) | द्वित्र्योः ४६ |
| धः, द्वित्र्योः अ-म् | ४६ एधाच् च । | |
| | ४७ याप्ये पाशप् । | |
| | ४८ पूरणाद्भागे तीयादन् । | पू-त् ४९, भागे ५१ अन् ५० |
| पू-त्, भागे, अन् | ४९ प्रागेकादशभ्योऽच्छन्दसि । | अच्छ-सि ५० |
| भागे, अच्छ-सि | ५० षष्ठाष्टमाभ्यां ञ च । | ष-म् ५१ |
| भागे | ५१ मानपश्वङ्गयोः कन्लुकौ च । | क-कौ ५२ |
| | ५२ एकादाकिनिच्चासहाये । | |
| | ५३ भूतपूर्वे चरट् । | चरट् ५४ |

१—(वा०) धमुञन्तात्स्वार्थे डदर्शनम् ।

| | | |
|---|---|---|
| चरट् | ५४ षष्ठ्या रूप्य च । | |
| | ५५ अतिशायने तमबिष्ठनौ । | अ-ने ५७, त-नौ ५६ |
| अ-ने, तमप् | ५६ तिङश्च । | तिङः ७१ |
| ,, तिङः | ५७ द्विवचन-विभज्योपपदे तरबीयसुनौ । | |
| | ५८ अजादी गुणवचनादेव । | अजादी ६५ |
| अजादी | ५९ तुश्छन्दसि । | |
| अजाद्योः | ६० प्रशस्यस्य श्रः । | प्रशस्यस्य ६१ |
| ,, प्र-स्य | ६१ ज्य च । | ज्य ६२ |
| ,, ज्य | ६२ वृद्धस्य च । | |
| ,, | ६३ अन्तिक-बाढयोर्नेदसाधौ । | |
| ,, | ६४ युवाल्पयोः कनन्यतरस्याम् । | |
| ,, | ६५ विन्मतोर्लुक् । | |
| | ६६ प्रशंसायां रूपप् । | |
| | ६७ ईषदसमाप्तौ कल्पब्-देश्य-देशीयरः । | ई-प्तौ ६८ |
| ई-प्तौ | ६८ विभाषा सुपो बहुच् पुरस्तात्तु । | सुपः ६९ |
| | ६९ प्रकारवचने जातीयर् । | |
| | ७० प्रागिवात्कः । | कः ९५ |
| तिङश्च | ७१ अव्यय-सर्वनाम्नामकच् प्राक् टेः ।(१) | अकच् ७२ |
| | ७२ कस्य च दः । | |
| कः | ७३ अज्ञाते । | |

१—(वा०) (क) अकच्प्रकरणे तूष्णीमः काम् प्रत्ययो वक्तव्यः। (ख) शीले को मलोपश्च।

| | | |
|---|---|---|
| कः | ७४ कुत्सिते । | कुत्सिते ७५ |
| कु-ते | ७५ संज्ञायां कन् । | |
| सुपः, तिङः, कन् | ७६ अनुकम्पायाम् । | अ-म् ८२ |
| कन् | ७७ नीतौ च तद्युक्तात् । | नीतौ ८१ त-त् ८० |
| अ-म्, नी-त् | ७८ बह्वचो मनुष्यनाम्नष्ठज्वा । | वह्वचः ठज्वा ८० म-म्नः ८२ |
| अ-म्, नी-त् ब-चः, म-म्नः | ७९ घनिलचौ च । | घ-चौ ८० |
| ,, ,, ,, घ-चौ | ८० प्राचामुपादेरडज्वुचौ च । | |
| म-म्नः, अ-म् नीतौ | ८१ जातिनाम्नः कन् । | कन् ८२ |
| कन्, म-म्नः | ८२ अजिनान्तस्योत्तरपदलोपश्च । | लोपः ८४ |
| लोपः | ८३ ठाजादावूर्ध्वं द्वितीयादचः । (१) | ठा-दौ अचः ८४ |
| लोपः, ठा-दौ, अचः | ८४ शेवल-सुपरि-विशाल-वरुणार्यमादीनां तृतीयात् । (२) | |
| कः | ८५ अल्पे । | |
| कः | ८६ ह्रस्वे । | ह्रस्वे ९० |
| ह्रस्वे | ८७ संज्ञायां कन् । | |
| ,, | ८८ कुटी-शमी-शुण्डाभ्यो रः । | |
| ,, | ८९ कुत्वा डुपच् । | |

१—(वा०) (क) चतुर्थादच ऊर्ध्वस्य लोपो वक्तव्यः। (ख) अनजादौ विभाषा लोपो वक्तव्यः (ग) लोपः पूर्वपदस्य च ठाजादावनजादौ च वक्तव्यः। (घ) विनापि प्रत्ययेन पूर्वोत्तरपदयोर्विभाषा लोपो वक्तव्यः। (ङ) उवर्णाल्ल इलस्य च (च) द्वितीयादचो लोपे सन्ध्यक्षरद्वितीयत्वे तदादेर्लोपवचनम्। (छ) एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः।

२—(वा०) *'वरुणादीनाम' तृतीयादचो लोपः सचाकृतसन्धीनामिति वक्तव्यम्।

*शेवलादीनाम् इति पा०।

| | | |
|---|---|---|
| ह्रस्वे | ९० कासू-गोणीभ्यां ष्टरच् । | ष्टरच् ९१ |
| ष्टरच् | ९१ वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे । | |
| | ९२ किं-यत्तदोर्निर्धारणे द्वयोरेकस्य डतरच् । | किं-दः, नि-णे एकस्य ९३ ड-च् ९४ |
| किं-दः, नि-णे, एकस्य | ९३ वा बहूनां जातिपरिप्रश्ने डतमच् । | डतमच् ९४ |
| डतरच्डतमचौ | ९४ एकाच्च प्राचाम् । | |
| | ९५ अवक्षेपणे कन् । | कन् १०० |
| | (अथ स्वार्थिकप्रत्यय—) | |
| कन् | ९६ इवे प्रतिकृतौ । | इवे १११, प्र-तौ १०० |
| ,, इवे | ९७ संज्ञायां च । | सञ्ज्ञायाम् १०० |
| स-म् कनः इवे प्र-तौ | ९८ लुम्मनुष्ये । | लुप् १०० |
| ,, कनोलुप् इवे | ९९ जीविकार्थे चापण्ये । | |
| ,, ,, | १०० देवपथादिभ्यश्च । (१) | |
| इवे | १०१ वस्तेर्ढञ् । | |
| ,, | १०२ शिलाया ढः । | |
| ,, | १०३ शाखादिभ्यो यत्* (२) | यत् १०४ |
| ,, | १०४ द्रव्यं च भव्ये । | |

---

१—(गणपा०) देवपथ, हंसपथ, वारिपथ, रथपथ, स्थलपथ, करिपथ, अजपथ, राजपथ, शतपथ, शङ्कुपथ (शंकुपथ), सिन्धुपथ (सिंहपथ का०), सिद्धगति (सिंहगति का०), उष्ट्रग्रीव (उष्ट्रग्रीवा का०), वामरज्जु (चामरज्जु का०), हस्त, इन्द्र, दण्ड, पुष्प, मत्स्य, जलपथ, रज्जु। आकृतिगणः। इति देवपथादिः।

२—(गणपा०) शाखा, मुख, जघन, शृङ्ग, मेघ, अभ्र, चरण, स्कन्ध (स्कद), स्कन्द, उरस्, शिरस्, अग्र, शरण (शाण) इति शाखादिः।

* शाखादिभ्यो यः इति पाठान्तरम्।

इवे　१०५ कुशाग्राच्छः ।　छः १०६

इवे छः　१०६ समासाच्च तद्विषयात् ।

,,　१०७ शर्करादिभ्योऽण् । (१)

,,　१०८ अङ्गुल्यादिभ्यष्ठक् । (२)　ठक् १०९

,, ठक्　१०९ एकशालायाष्ठजन्यतरस्याम् ।

,,　११० कर्क-लोहितादीकक् ।

,,　१११ प्रत्न-पूर्व-विश्वेमात्थाल् छन्दसि ।

११२ पूगाञ्ञ्योऽग्रामणीपूर्वात् ।　ञ्यः ११३

ञ्यः　११३ व्रातच्फञोरस्त्रियाम् ।

११४ आयुधजीविसंघाञ्ञ्यड्वाहीकेष्वब्राह्मण-राजन्यात् ।　आ-त् ११७

आ-त्　११५ वृकाट्टेण्यण् ।

,,　११६ दामन्यादि-त्रिगर्त-षष्ठाच्छः । (३)

---

१—(गणपा०) शर्करा, कपालिका, कपाटिका, कनिष्ठिका (कपिष्ठिका, पिष्टिका, कनिष्ठिक), पुण्डरीक, शतपत्र, गोलोमन्, लोमन्, गोपुच्छ, नराची (नरालि का०), नकुल (नकुला का०), सिकता। इति शर्करादिः।

२—(गणपा०) अङ्गुलि (अङ्गुली), भरुज, बभ्रु, वल्गु, मण्डर, मण्डल, शष्कुली, (शष्कुल का०), हरि, कपि, मुनि, रुह, खल, उदश्वित्, गोणि, उरस्, कुलिश, शिखा। इत्यङ्गुल्यादिः।

३—(गणपा०) दामनि, औलपि, वैजवापि, औदकि, (औतकी, औतकि का०), औवङ्कि, आच्युतन्ति (अच्युतन्ति का०), आच्युतदन्ति (अच्युतदन्ति), शाकुन्तकि, आकिदन्ति, औडवि, काकदन्तकि (काकदन्ति का०), शात्रुंतपि, सार्वसेनि, विन्दु, वैन्दवि, तुलभ, मौंजायन, काकन्दि, सावित्रीपुत्र, काकरन्ति, देववापि, अपच्युतकी, कर्की पिण्ड। इति दामन्यादिः।

आन्त्		११७ पर्श्वादियौधेयादिभ्योऽणञौ (१)

११८ अभिजिद्-विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ्।

११९ ञ्यादयस्तद्राजाः।

इति पंचमाध्यायस्य तृतीयः पादः

## अथ चतुर्थः पादः

(स्वार्थिकाः प्रत्ययाः प्रकृताः)

१ पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च।		पा-स्य, सं-देः वुन् २

पा-स्य, सं-देः, वुन्		२ दण्डव्यवसर्गयोश्च।

३ स्थूलादिभ्यः प्रकारवचने कन्। (२)		कन् ६

कन्		४ अनत्यन्तगतौ क्तात्।		क्तात् ५

---

१—(गणपा०) पर्शु, असुर, रक्षस्, वाह्लीक, वयस्, वसु, मरुत्, सत्वत्, दशार्ह, पिशाच, अशनि, कार्षापण। इति पर्श्वादिः।

यौधेय, कौशेय, शौक्रेय, शौभ्रेय, धार्तेय, धार्तेय (धौर्तेय, ज्यावाणेय (जावालेय का०), त्रिगर्त, भरत, उशीनर, क्रौशेय, वार्तेय। इति यौधेयादिः।

२—(वा०) कन्प्रकरणे चञ्चद्बृहतोरुपसंख्यानम्।

(गणपा०) स्थूल, अणु, (अण्ड) माष, (स्थूल अणु माषेषु), इषु, कृष्ण तिलेषु, यव व्रीहिषु, इक्षु तिल (का०), पाद्यकालावदाताः सुरायाम्, गोमूत्र आच्छादने, सुरा अहौ, जीर्ण शालिषु पत्रमूले समस्तव्यस्ते (का०), कुमारीपुत्र, कुमारीश्वशुर (कुमार श्वशुर का०), मणि। इति स्थूलादिः।

| | | |
|---|---|---|
| क्तात्, कन् | ५ न सामिवचने । | |
| कन् | ६ बृहत्या आच्छादने । | |
| | ७ अषडक्षाशितंग्वलंकर्मालंपुरुषाध्युत्तरपदात्खः । | खः ८ |
| खः | ८ विभाषाञ्चेरदिक् स्त्रियाम् । | |
| | ९ जात्यन्ताच्छ बन्धुनि । | छः १० |
| छः | १० स्थानान्ताद्विभाषा सस्थानेनेति चेत् । | |
| | ११ किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे । | कि-त् आमु १५ अ-र्षे १५ |
| किमे-त्, अ-र्षे आमु | १२ अमु च च्छन्दसि । | |
| | १३ अनुगादिनष्ठक् । | |
| | १४ णचः स्त्रियामञ् । | |
| | १५ अणिनुणः । | अण् १६ |
| अण् | १६ विसारिणो मत्स्ये । | |
| | १७ संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् । | सं-याः १८, क्रि-ने २०, कृ-च् २० |
| सं-याः, क्रि-ने | १८ द्वि-त्रि-चतुर्भ्यः सुच् । | सुच् १९ |
| क्रिया-ने, सुच् | १९ एकस्य सकृच्च । | |
| क्रिया-ने, कृ-च् | २० विभाषा बहोर्धाविप्रकृष्टकाले । | |
| | २१ तत्प्रकृतवचने मयट् । | तत्, प्र-ने, म-ट् २५ |
| तत्प्र-ने, मयट् | २२ समूहवच्च बहुषु । | |
| | २३ अनन्तावसथेतिह-भेषजाञ्ञ्यः । | |
| | २४ देवतान्तात्तादर्थ्ये यत् । | ता-र्थ्ये २६, यत् २२ |

| | | |
|---|---|---|
| तादर्थ्ये, यत् | २५ पादार्घाभ्याञ्च । | |
| ,, | २६ अतिथेर्ञ्यः । | |
| | २७ देवात्तल् । | |
| | २८ अवेः कः । | |
| | २९ यावादिभ्यः कन् । (१) | कन् ३३ |
| कन् | ३० लोहितान्मणौ । (२) | लो-त् ३२ |
| लो-त्, कन् | ३१ वर्णेचानित्ये । | अनित्ये ३३ |
| ,, , कन् | ३२ रक्ते । | रक्ते ३३ |
| अ-त्ये, रक्ते, कन् | ३३ कालाच्च । | |
| | ३४ विनयादिभ्यष्ठक् । (३) | ठक् ३५ |
| ठक् | ३५ वाचो व्याहृतार्थायाम् । | व्या-म् ३६ |
| व्या-म् | ३६ तद्युक्तात्कर्मणोऽण् (४) | अण् ३८ |

---

**१—(गणपा०) याव, मणि, अस्थि, तालु, जानु, सान्द्र, पीत, स्तम्ब (पीतस्तम्ब का०), ऋतावुष्णशीते, पशौ लूनविपाते (पशो लूनवियाते का०), अणु (अण्ड) निपुणे, पुत्र कृत्रिमे, स्नात वेदसमाप्तौ, शून्य रिक्ते, दान कुत्सिते तनु सूत्रे, ईयसश्च (श्रेयस्क का०), ज्ञात, अज्ञात, कुमारी क्रीडनकानि च, चण्ड। इति यावादिः।**

२—(वा०) (क) लोहिताल्लिङ्गबाधनं वा वक्तव्यम्। (ख) अक्षरसमूहे छन्दस उपसंख्यानम्। (ग) नवस्य नू त्नप्तनखाश्च। (ध) नश्च पुराणे प्रात्।

**३—(गणपा०) विनय, समय, उपायो (उपायाद् का०) ह्रस्वत्वं च (औपयिक), संप्रति, संगति, कथंचित्, अकस्मात्, समाचार, उपचार, समयाचार, (समापचार), व्यवहार, संप्रदान, समुत्कर्ष, समूह, विशेष, अत्यय, अस्थि, कण्डु। इति विनयादिः।**

४—(वा०) (क) अणप्रकरणे कुलालवरुडनिपादकर्मारचण्डालामित्रेभ्यश्छन्दस्युपसंख्यानम्। (ख) भागरूपनामभ्यो धेयः। (ग) मित्राच्छन्दसि। (घ) अणमित्राच्च। (ङ) अग्नीध्रसाधारणादञ्। (च) अयवसमरुद्भ्यां छन्दसि। (छ) नवसूरमर्तयविष्ठेभ्यो यत्। (ज) क्षेमाद्यः।

| | | |
|---|---|---|
| अण् | ३७ ओषधेरजातौ । | |
| अण् | ३८ प्रज्ञादिभ्यश्च । (१) | |
| | ३९ मृदस्तिकन् । | मृदः ४०, |
| मृदः | ४० सस्नौ प्रशंसायाम् । | प्रशंसायाम् ४१ |
| प्रशंसायाम् | ४१ वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि । | |
| | ४२ बह्वल्पार्थाच्छस् कारकादन्यतरस्याम् । (२) | शस् ४३, अ-म् ४९ |
| शस्, अ-म् | ४३ संख्यैकवचनाच्च वीप्सायाम् । | |
| | ४४ प्रतियोगे पञ्चम्यास्तसिः । (३) | प-म्याः ४५ तसिः ४९ |
| पंचम्याः, वा, तसिः | ४५ अपादाने चाहीयरुहोः । | |
| वा, तसिः | ४६ अतिग्रहाव्यथन-क्षेपेष्वकर्तरि तृतीयायाः । | अ-रि, तृ-याः ४७ |
| तृ-याः, अ-रि, तसिः वा | ४७ हीयमान-पापयोगाच्च । | |
| तसिः, वा | ४८ षष्ठ्या व्याश्रये । | षष्ठ्याः ४९ |
| षष्ठ्याः. तसिर्वा | ४९ रोगाच्चापनयने । | |

---

१—(गणपा०) प्रज्ञ, वणिज, उशिज्, उष्णिज्, (उष्णिक्, उष्णिग् का०), प्रत्यक्ष, विद्वस्, विदन्, षोडन्, विद्या, मनस्, श्रोत्र शरीरे, जुह्वत्, कृष्ण मृगे, चिकीर्षत्, चोर, शत्रु, (शक का०), योष, चक्षुस् (यक्षस् का०), वसु (वस् का०), एनस् (एत् का०), मरुत्, कुंच (कुङ् का०), सत्वत् (सत्वन्तु, सत्वन्त), दशार्ह, वयस्, व्याकृत, असुर (आतुर का०), रक्षस्, पिशाच, अशनि, कर्षापण (कार्षापण का०), देवता, बन्धु, षोडश, धूर्त, राजा। इति प्रज्ञादिः।

२—(वा०) बह्वल्पार्थान्मङ्गलामङ्गलवचनम् ।

३—(वा०) तसिप्रकरणे आद्यादिभ्य उपसंख्यानम् ।

| | | |
|---|---|---|
| | ५० कृभ्वस्तियोगे संपद्यकर्तरि च्विः । (१) | कृ-गे ५७, स-रि ५२, च्विः ५१ |
| कृ-गे स-रि, च्वि॰ | ५१ अरुर्मनश्चक्षुश्चेतो-रहो-रजसां लोपश्च । | |
| कृ-गे स-रि | ५२ विभाषा साति कार्त्स्न्ये । | वि-षा ५३, साति ५५ |
| च्विविषये, सातिः | ५३ अभिविधौ संपदा च । | संपदा ५५ |
| कृ-भिः, संपदासाति | ५४ तदधीनवचने । | त-ने ५५ |
| तदधी-ने, सातिः कृ-गे संपदा | ५५ देये त्रा च । | त्रा ५६ |
| त्रा, कृ-गे | ५६ देव-मनुष्य-पुरुष-पुरु-मर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् । | |
| कृ-गे | ५७ अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् । | डाच् ६७ |
| डाच् | ५८ कृञो द्वितीय-तृतीय-शम्ब-बीजात्कृषौ । | कृञ ६७ कृषौ ५९ |
| कृञः, कृषौ, डाच् | ५९ संख्यायाश्च गुणान्तायाः । | |
| कृञः डाच् | ६० समयाच्च यापनायाम् । | |
| ,, ,, | ६१ सपत्र-निष्पत्रादतिव्यथने । | |
| ,, ,, | ६२ निष्कुलान्निष्कोषणे । | |
| ,, ,, | ६३ सुख-प्रियादानुलोम्ये । | |
| डाच्, कृञः | ६४ दुःखात्प्रातिलोम्ये । | |
| डाच्, कृञः | ६५ शूलात्पाके । | |
| ,, ,, | ६६ सत्यादशपथे । | |
| ,, ,, | ६७ मद्रात्परिवापणे । (२) | |

१—(वा०) च्विविधावभूततद्भावग्रहणम् ।

२—(वा०) भद्राच्चेति वक्तव्यम् ।

(समासान्तप्रत्यय—)

६८ समासान्ताः।* 　　स-न्ताः १६०

स-न्ताः　६९ न पूजनात्। (१) 　　न ७२

,, न　७० किमः क्षेपे।

,, ,,　७१ नञस्तत्पुरुषात्। 　　नञः, त-त् ७२

नञः, त-त्, स-न्ताः न　७२ पथो विभाषा।

७३ बहुव्रीहौ संख्येये डजबहुगणात्। (२)

(सर्वसमासान्त—)

७४ ऋक्पूरब्धूः पथामानक्षे।

७५ अच् प्रत्यन्ववपूर्वात्सामलोम्नः। 　　अच् ८७

अच्　७६ अक्ष्णोऽदर्शनात्।

,,　७७ अचतुर-विचतुर-सुचतुर-स्त्रीपुंस-धेन्वनडुहर्क्साम-वाङ्मनसाक्षिभ्रुव-दारगवोर्वष्ठीव-पदष्ठीव-नक्तंदिव-रात्रिन्दिवाहर्दिव-सरजस-निःश्रेयस-पुरुषायुष-द्व्यायुष-त्र्यायुषर्ग्यजुष-जातोक्ष-महोक्ष-वृद्धोक्षोपशुन-गोष्ठश्वाः। (३)

अच्　७८ ब्रह्म-हस्तिभ्यां वर्चसः।

---

* समासान्तपदस्याधिकारत्वादुत्तरत्र न प्रदर्शिता तदनुवृत्तिः।

१—(वा०) (क) पूजायां स्वतिग्रहणं कर्तव्यम् (ख) प्रागबहुव्रीहिग्रहणं च कर्तव्यम्।

२—(वा०) डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं निस्त्रिंशाद्यर्थम्।

३—(वा०) चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानम्।

| | | |
|---|---|---|
| अच् | ७९ अव-समन्धेभ्यस्तमसः । | |
| ,, | ८० श्वसो-वसीयः श्रेयसः । | |
| ,, | ८१ अन्ववतप्ताद्रहसः । | |
| ,, | ८२ प्रतेरुरसः सप्तमीस्थात् । | |
| ,, | ८३ अनुगवमायामे । | |
| ,, | ८४ द्विस्तावा त्रिस्तावा वेदिः । | |
| ,, | ८५ उपसर्गादध्वनः । | |
| | (तत्पुरुषसमासान्त—) | |
| ,, | ८६ तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः । | त-स्य १०५, स-देः ८८ |
| तत्पुरुषात् अच् | ८७ अहः-सर्वैकदेश-संख्यात-पुण्याच्च रात्रेः । | |
| त-त् | ८८ अह्नोऽह्न एतेभ्यः । | अन्हः, अन्हः ९० |
| त-स्य, अन्ह अन्हः | ८९ न संख्यादेः समाहारे । | |
| अन्हः, अन्हः | ९० उत्तमैकाभ्याञ्च । | |
| तत्पुरुषात् | ९१ राजाहः-सखिभ्यष्टच् । | टच् ११२ |
| तत्पु-त्, टच् | ९२ गोरतद्धितलुकि । | |
| ,, ,, | ९३ अग्राख्यायामुरसः । | |
| ,, ,, | ९४ अनोश्मायःसरसां जातिसंज्ञयोः। | |
| ,, ,, | ९५ ग्रामकौटाभ्याञ्च तक्ष्णः । | |
| ,, ,, | ९६ अतेः शुनः । | शुनः ९७ |
| शुनः, तत्पु-त्,, | ९७ उपमानादप्राणिषु । | उ-त् ९८ |
| उ-म्, त-त्, टच् | ९८ उत्तर-मृग-पूर्वाच्च सक्थ्नः । | |
| टच् | ९९ नावो द्विगोः । | नावः १००, द्विगोः १०१ |

| | | |
|---|---|---|
| नावः,त-त्,टच् | १०० अर्धाच्च । | अर्धात् १०१ |
| अ-त्,त-त्,टच् | १०१ खार्याः प्राचाम् । | |
| त-त्, टच् | १०२ द्वि-त्रिभ्यामञ्जलेः । | |
| ,, ,, | १०३ अनसन्तान्नपुंसकाच्छन्दसि । (१) | |
| ,, ,, | १०४ ब्रह्मणो जानपदाख्यायाम् । | ब्रह्मणः १०५ |
| ,, ,, ब्र-णः | १०५ कु-महद्भ्यामन्यतरस्याम् । | |
| | (द्वन्द्वसमासान्तप्रत्यय—) | |
| टच् | १०६ द्वन्द्वाच्चु-द-ष-हान्तात्समाहारे। | |
| | (अव्ययीभावसमासान्त—) | |
| ,, | १०७ अव्ययीभावे शरत्प्रभृतिभ्यः । (२) | अ-ये ११२ |
| अ-ये, टच् | १०८ अनश्च । | अनः १०९ |
| अनः,अ-वे,टच् | १०९ नपुंसकादन्यतरस्याम् । | अ-म् १११ |
| अ-वे, टच् | ११० नदी-पौर्णमास्याग्रहायणीभ्यः। | |
| ,, ,, | १११ झयः । | |
| अ-,वे टच् | ११२ गिरेश्च सेनकस्य । | |
| | (बहुव्रीहिसमासान्तप्रत्यय—) | |
| | ११३ बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् । | बहुव्रीहौ १६० षच् ११४ |
| ब-ही, षच् | ११४ अङ्गुलेर्दारुणि । | |
| ब-ही | ११५ द्वित्रिभ्यां ष मूर्ध्नः । | |

---

१—(वा०) अनसन्तान्नपुंसकाच्छन्दसि वा वचनम्।

२—(गणपा०) शरद्, विपाश्, अनस्, मनस्, उपानह्, अनडुह्, दिव, हिमवत्, हिरुक्, विद्, सद्, दिश्, दृश्, विश्, चतुर, त्यद्, तद्, यद्, कियत्, जराया जरस् च। प्रतिपरसमनुभ्योऽक्ष्णः। पथिन्, सदृश्, इति शरदादिः।

| | | |
|---|---|---|
| बहुव्रीहौ | ११६ अप् पूरणी-प्रमाण्योः । (१) | अप् ११७ |
| ,, अप् | ११७ अन्तर्बहिर्भ्यां च लोम्नः । | |
| ,, | ११८ अञ्नासिकायाः संज्ञायां नसं चास्थूलात् । (२) | अच् १२१, ना-याः ११९ |
| ना-याः, ब-ह्रौ, अच् | ११९ उपसर्गाच्च । (३) | |
| अच् ब-ह्रौ | १२० सुप्रात-सुश्व-सुदिव-शारिकुक्ष-चतुरश्रैणीपदाजपद-प्रोष्ठपदाः। | |
| ब-ह्रौ, अच् | १२१ नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् । | न-भ्यः १२२ |
| न-भ्यः बहुव्रीहौ | १२२ नित्यमसिच् प्रजामेधयोः । | असिच् १२३ |
| असिच् ब-ह्रौ | १२३ बहुप्रजाश्छन्दसि । | |
| ,, | १२४ धर्मादनिच् केवलात् । | अनिच् १२६ |
| अनिच् ,, | १२५ जम्भा सु-हरित-तृण-सोमेभ्यः। | |
| ,, ,, | १२६ दक्षिणेर्मा लुब्धयोगे । | |
| बहुव्रीहौ | १२७ इच् कर्मव्यतिहारे । | इच् १२८ |
| इच् | १२८ द्विदण्ड्यादिभ्यश्च । (४) | |
| ब-ह्रौ | १२९ प्रसम्भ्यां जानुनोर्ज्ञुः । | जा-नोः,ज्ञुः १३० |

१—(वा०) (क) अपि प्रधानपूरणीग्रहणं कर्तव्यम् (ख) नेतुर्नक्षत्र उपसंख्यानम् (ग) छन्दसि च नेतुरुपसंख्यानम्। (घ) मासाद्भृतिप्रत्ययपूर्वपदाट्ठञ्विधिः।

२—(वा०) (क) खुरखराभ्यां नस् वक्तव्यः। (ख) अप्रत्ययोऽपीष्यते।

३—(वा०) (क) वेर्ग्रो वक्तव्यः। (ख) ख्यश्च।

**४—(गणपा०) द्विदण्डि, द्विमुसलि, उभांजलि, उभयांजलि, उभादन्ति, उभयादन्ति, उभाहस्ति, उभयाहस्ति, उभाकर्णि, उभयाकर्णि, उभापाणि, उभयापाणि, उभाबाहु, उभयाबाहु, एकपदि, प्रोह्यपदि, आढ्यपदि (आव्यपदि) सपदि, निकुच्यकर्णि, संहतपुच्छि, अन्तेवासि। इति द्विदण्ड्यादिः।**

| | | |
|---|---|---|
| बहु-जा-नः, शुः | १३० ऊर्ध्वाद्विभाषा । | |
| ,, | १३१ ऊधसोऽनङ् । (१) | अ-ङ् १३३ |
| ,, अनङ् | १३२ धनुषश्च । | धनुषः १३३ |
| ,, धनुषः,अ-ङ् | १३३ वा संज्ञायाम् । | |
| ,, | १३४ जायाया निङ् । | |
| ,, | १३५ गन्धस्येदुत्पूति-सु-सुरभिभ्यः । (२) | ग-स्य, इत् १३७ |
| ,, ग-स्य, इत् | १३६ अल्पाख्यायाम् । | |
| ,, ,, ,, | १३७ उपमानाच्च । | उपमानात् १३८ |
| उप-त्, बहु-हो | १३८ पादस्य लोपोऽहस्त्यादिभ्यः । (३) | |
| ब-हो, पा-स्य, लोपः | १३९ कुम्भपदीषु च । (४) | |
| ,, ,, ,, | १४० संख्या-सुपूर्वस्य । | स-स्य १४१ |
| स-स्य | १४१ वयसि दन्तस्य दतृ । | दन्त-तृ १४५ |

---

१—(वा०) ऊधसोऽनङि स्त्रीग्रहणम् ।

२—(वा०) गन्धस्येत्वे तदेकान्तग्रहणम् ।

३—(गणपा०) हस्तिन्, कुद्दाल, अश्व, कशिक, कुरुत, कटोल, कटोलक, गण्डोल, गण्डोलक, कण्डोल, कण्डोलक, अज, कपोत, जाल, गण्ड, महेला (महिला का०), दासी, गणिका, कुसूल, इति हस्त्यादिः ।

४—(गणपा०) कुम्भपदी, एकपदी, जालपदी, शलपदी, मुनिपदी, गुणपदी, शतपदी, सत्रपदी, गोधापदी, कलशीपदी, विपदी, तृणापदी, द्विपदी, त्रिपदी, षट्पदी, दासीपदी, शीतिपदी, विष्णुपदी, सुपदी, निष्पदी, आर्द्रपदी, कुणिपदी (कुणपदी का०), कृष्णापदी, शुचिपदी, द्रोणापदी (द्रोणीपदी), द्रुपदी, सूकरपदी, शकृत्पदी, अष्टापदी, स्थूणापदी, (स्थूलपदी का०), अपदी, सूचीपदी, मालापदी, गोपदी, घृतपदी, सूपपदी, पंचपदी, अर्वपदी, स्तनपदी, कलहंसपदी, विषपदी । इति कुम्भपद्यादिः ।

| | | |
|---|---|---|
| ब-ह्रौ, दन्तस्य दत् | १४२ छन्दसि च । | |
| बहुह्रौ, ,, ,, | १४३ स्त्रियां संज्ञायाम् । | |
| ,, ,, ,, | १४४ विभाषा श्यावारोकाभ्याम् । | विभाषा १४५ |
| वा, ब-ह्रौ, दस्य, दत् | १४५ अग्रान्त-शुद्ध-शुभ्र-वृष-वराहेभ्यश्च । | |
| बहुव्रीहौ | १४६ ककुदस्यावस्थायां लोपः । | लोपः १५० |
| बहुव्रीहौ, लोपः | १४७ त्रिककुत्पर्वते । | |
| ,, ,, | १४८ उद्विभ्यां काकुदस्य । | का-स्य १४९ |
| ,, ,, का-स्य, | १४९ पूर्णाद्विभाषा । | |
| | १५० सुहृद्दुर्हृदौ मित्रामित्रयोः । | |
| बहुव्रीहौ | १५१ उरःप्रभृतिभ्यः कप् । (१) | कप् १५९ |
| ,, कप् | १५२ इनः स्त्रियाम् । | |
| ,, ,, | १५३ नद्यृतश्च । | |
| ,, ,, | १५४ शेषाद्विभाषा । | |
| ,, ,, | १५५ न संज्ञायाम् । | न १६० |
| ,, ,, न | १५६ ईयसश्च । | |
| ,, ,, ,, | १५७ वन्दिते भ्रातुः । | |
| ,, ,, ,, | १५८ ऋतश्छन्दसि । | |
| ,, ,, ,, | १५९ नाडीतन्त्र्योः स्वाङ्गे । | |
| | १६० निष्प्रवाणिश्च । | |

इति पञ्चमाध्यायस्य चतुर्थः पादः।

पञ्चमाध्यायश्च समाप्तः।

---

१—(गणपा०) उरस्, सर्पिस्, उपानह, पुमान्, अनड्वान्, पयः, नौः, लक्ष्मीः, दधि, मधु, शालिः (शाली) अर्थान्नञः। इत्युरआदिः।

# अथ षष्ठोऽध्यायः

## प्रथमः पादः

(अथ द्वित्व—)

| | | |
|---|---|---|
| | १ एकाचो द्वे प्रथमस्य । | ए-चः, द्वे, प्र-स्य ११ |
| द्वे, एकाचः | २ अजादेर्द्वितीयस्य । | अ-देः द्वि-स्य ११ |
| द्वे, अचः | ३ नन्द्राः संयोगादयः । (१) | |
| | ४ पूर्वोऽभ्यासः । | |
| | ५ उभे अभ्यस्तम् । | अभ्यस्तम् ६ |
| अभ्यस्तम् | ६ जक्षित्यादयः षट् । | |
| | ७ तुजादीनां दीर्घोऽभ्यासस्य । | |
| प्र-चः, अ-देः द्वि-स्य | ८ लिटि धातोरनभ्यासस्य । (२) | धातोः, अ-स्य ११ |
| अन-स्य धातोःद्वे | ९ सन्यङोः । | |
| ,, ,, ,, | १० श्लौ । | |
| ,, ,, ,, | ११ चङि । | |
| | १२ दाश्वान् साह्वान् मीढ्वाँश्च । (३) | |

---

१—(वा०) (क) ईर्ष्यतेस्तृतीयस्य द्वे भवत इति वक्तव्यम् । (ख) कण्ड्वादीनां च (ग) वा नामधातूनां तृतीयस्य द्वे भवत इति वक्तव्यम् । (घ) यथेष्टं वा नामधातुषु ।

२—(वा०) द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम् ।

३—(वा०) (क) द्विर्वचनप्रकरणे कृञादीनां के । (ख) चरिचलिपतिवदीनां द्वित्वमच्याक्चाभ्यासस्य । (ग) हन्तेर्घश्च । (घ) पाटेर्णिलुक् च दीर्घश्चाभ्यासस्योक्च ।

(अथ सम्प्रसारण—)

| | | |
|---|---|---|
| | १३ ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे । | ष्यङः १४ स-म् ३१ |
| ष्यङः स-म् | १४ बन्धुनि बहुव्रीहौ । (१) | |
| स-म् | १५ वचि-स्वपि-यजादीनां किति । | व-म् १७ किति १६ |
| व-म्, स-म्, किति | १६ ग्रहि-ज्या-वयि-व्यधि-वष्टि-विचति-वृश्चति-पृच्छति-भृज्जतीनां ङिति च । | ग्र-नाम् १७ |
| स-म् | १७ लिट्यभ्यासस्योभयेषाम् । | |
| ,, | १८ स्वापेश्चङि । | |
| ,, | १९ स्वपि-स्यमि-व्येञां यङि । | यङि २१ |
| ,, यङि | २० न वशः । | |
| यङि | २१ चायः की । | |
| | २२ स्फायः स्फी निष्ठायाम् । | नि-म् २८ |
| नि-म्, स-म् | २३ स्त्यः प्रपूर्वस्य । | |
| ,, ,, | २४ द्रवमूर्ति-स्पर्शयोः श्यः । | श्यः २६ |
| श्यः, नि-म्, स-म् | २५ प्रतेश्च । | |
| ,, ,, ,, | २६ विभाषाऽभ्यवपूर्वस्य । | विभाषा २८ |
| विभाषा | २७ शृतं पाके । | |
| नि-म्, वि-षा | २८ प्यायः पी । | प्यायः पी २९ |
| प्यायः पी | २९ लिड्यङोश्च । | लिड्यङोः ३० |
| लि-ङोः, स-म् | ३० विभाषा श्वेः । | वि-षा, श्वेः ३१ |
| वि-षा, श्वेः स-म् | ३१ णौ च संश्चङोः । | णौ स-ङोः ३२ |

---

१—(वा०) मातच्मातृकमातृषु ष्यङ् प्रसार्यो विभाषया ।

| | | |
|---|---|---|
| णौ, स-ङोः | ३२ ह्वः सम्प्रसारणम् । | ह्वः ३४, स-म् ४४ |
| ह्वः, स-म् | ३३ अभ्यस्तस्य च । | |
| ह्वः, स-म् | ३४ बहुलं छन्दसि । | ब-म् ३५, छसि ३६ |
| बहु-म् छ-सि | ३५ चायः की । | |
| ,, | ३६ अपस्पृधेथामानृचुरानृहुश्चिच्युषे-तित्याज-श्राताः श्रितमाशीरा शीर्ताः । | |
| | ३७ न सम्प्रसारणे सम्प्रसारणम् । (१) | न ४४ |
| न, स-म् | ३८ लिटि वयो यः । | लिटि ४० |
| लिटि | ३९ वश्चास्यान्यतरस्यां किति । | |
| लिटि, न, स-म् | ४० वेञः । | वेञः ४१ |
| ,, ,, ,, वेञः | ४१ ल्यपि च । | ल्यपि ४४ |
| ल्यपि, न, स-म् | ४२ ज्यश्च । | |
| ,, ,, ,, | ४३ व्यश्च । | व्यः ४४ |
| ल्यपि, व्यश्च, न, स-म् | ४४ विभाषा परेः । | |

(आत्वविधि—)

| | | |
|---|---|---|
| धातोः | ४५ आदेच उपदेशेऽशिति । | आत् एचः ५७ उ-शे ६५ |
| आत् | ४६ न व्यो लिटि । | |
| आत्-एचः | ४७ स्फुरति-स्फुलत्योर्घञि । | |
| ,, ,, | ४८ क्रीङ्-जीनां णौ । | णौ ४९ |

---

१—(वा०) (क) रयेर्मतौ बहुलम् । (ख) ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि । (ग) कक्ष्यायाः संज्ञायाम् ।

| | | |
|---|---|---|
| णौ आत्, एचः | ४९ सिध्यतेरपारलौकिके । | |
| आदेचः, उपदेशे | ५० मीनाति-मिनोति-दीङां ल्यपि च। (१) | ल्यपि ५१ |
| ल्यपि, आदेचः उपदेशे | ५१ विभाषा लीयतेः । | विभाषा ५६ |
| विभाषा, आदेचः | ५२ खिदेश्छन्दसि । | |
| ,, ,, | ५३ अपगुरो णमुलि । | |
| ,, ,, | ५४ चिस्फुरोर्णौ । | णौ ५७ |
| ,, ,, णौ | ५५ प्रजने वीयतेः । | |
| ,, ,, ,, | ५६ बिभेतेर्हेतुभये । | हे-ये ५७ |
| णौ, हे-ये, आत् | ५७ नित्यं स्मयतेः । | |
| | ५८ सृजि-दृशोर्झल्यमकिति । | झलि, अम्, अकिति ५९ |
| उपदेशे, झल्यमकिति | ५९ अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् । | |
| | ६० शीर्षंश्छन्दसि । | शीर्षन् ६१ |
| शीर्षन् | ६१ ये च तद्धिते । (२) | |
| विभाषा | ६२ पद्दन्नो-मास्-हृन्निशसन्-यूषन्-दोषन्-यकञ्छकन्नुदन्नासञ्छस् प्रभृतिषु । (३) | |

---

१—(वा०) निमीमिलियां खलचोः प्रतिषेधो वक्तव्यः।

२—(वा०) (क) वा केशेषु। (ख) अचि शीर्षः।* (ग) छन्दसि च।

३—(वा०) (क) पदादिषु मांसपृत्स्नूनामुपसंख्यानम्। (ख) नस् नासिकाया यत्तस्क्षुद्रेषु। (ग) अवर्णनगरयोरिति वक्तव्यम्।

---

*यद्यपीदं वार्तिकं काशिकादिषु सूत्रत्वेन गृहीतं दृश्यते तथापि महाभाष्ये वार्तिकेषूपलम्भादस्माभिर्वार्तिकपाठे संगृहीतम्।

| | | |
|---|---|---|
| उपदेशे | ६३ धात्वादेः षः सः । (१) | धात्वादेः ६४ |
| ,, | ६४ णो नः । | |
| | ६५ लोपो व्योर्वलि । | लोपः ६६ |
| लोपः | ६६ वेरपृक्तस्य । | |
| ,, हल् | ६७ हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् । | हल् ६८ |
| ,, ,, | ६८ एङ्ह्रस्वात्संबुद्धेः । | |
| ,, | ६९ शेश्छन्दसि बहुलम् । | |
| | (तुग्विधि—) | |
| | ७० ह्रस्वस्य पिति कृति तुक् । | ह्र-स्य ७२, तुक् ७५ |
| | ७१ संहितायाम् । | स-म् १५४ |
| स-म्, तुक् | ७२ छे च । | छे ७५ |
| ,, ,, छे | ७३ आङ्माङोश्च । | |
| ,, ,, ,, | ७४ दीर्घात् । | दी-त् ७५ |
| ,, ,, ,, | ७५ पदान्ताद्वा । (२) | |
| सं-म् | ७६ इको यणचि । | अचि १२१ |
| सं-म् अचि | ७७ एचोऽयवायावः । | एचः ७९ |
| एचः | ७८ वान्तो यि प्रत्यये । (३) | वान्तः ७९ यि, प्र-ये ८२ |
| एचः, वान्तः, यिप्रत्यये | ७९ धातोस्तन्निमित्तस्यैव । | धातोः ८३ |
| अय्, यि,-प्र-ये | ८० क्षय्यजय्यौ शक्यार्थे । | |
| ,, ,, | ८१ क्रय्यस्तदर्थे । | |

---

१—(वा०) मादंशे सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्यः।

२—(वा०) दीर्घात्पदान्ताद्वा विश्वजनादीनां छन्दसि।

३—(वा०) (क) गोर्यूतौ छन्दसि; (ख) अध्वपरिमाणे च।

| | | |
|---|---|---|
| ,, ,, | ८२ भय्यप्रवय्ये च च्छन्दसि। (१) | |
| | (एकादेश—) | |
| एकः, पू-योः | ८३ एकः पूर्वपरयोः । | एकः,पू-योः ११० |
| एकादेशः | ८४ अन्तादिवच्च । | |
| एकादेशः | ८५ षत्वतुकोरसिद्धः । (२) | |
| | (एकादेशे गुण—) | |
| अचि | ८६ आद्गुणः । | आत् ९५ |
| | (एकादेशे वृद्धि—) | |
| आत् | ८७ वृद्धिरेचि । | वृद्धिः ९१, एचि ८८ |
| आत्, वृद्धिरेचि | ८८ एत्येधत्यूठ्सु । (३) | |
| अचि, वृद्धिः, | ८९ आटश्च । | |
| आत्, वृद्धिः | ९० उपसर्गादृति धातौ । | उ-त्, धातौ ९३ ऋति ९१ |
| आत्, उप-त्, ऋति, धातौ | ९१ वा सुप्यापिशलेः । | |
| आत् | ९२ औतोऽम्शसोः । | |
| | (एकादेशे पररूप—) | |
| आत्,उ-त्,धातौ | ९३ एङि पररूपम् । (४) | पररूपम् ९८ |
| आत्, पर-म् | ९४ ओमाङोश्च । | |

---

१—(वा०) भय्यादिप्रकरणे ह्रदय्या उपसंख्यानम्।

२—(वा०) पदान्तपदाद्योरेकादेशोऽसिद्ध इति वक्तव्यम्।

३—(वा०) (क) अक्षादूहिन्याम्। (ख) स्वादीरेरिणोः। (ग) प्रादूहोढोढ्येषैष्येषु। (घ) ऋते च तृतीयासमासे। (ङ) प्रवत्सतरकम्बलवसनानामृणे। (च) ऋणदशाभ्यां च।

४—(वा०) (क) एवे चानियोगे। (ख) शकन्ध्वादिषु च। (ग) ओत्वोष्ठयोः समासे वा। (घ) एमन्नादिषु छन्दसि पररूपं वक्तव्यम्। (ङ) सीमन्तः केशवेशेषु।

| | | |
|---|---|---|
| आत् पर-म् | ९५ उस्यपदान्तात् । | अ-त् ९६ |
| अ-त्, पर-म् | ९६ अतो गुणे । | |
| पर-म् | ९७ अव्यक्तानुकरणस्यात इतौ।(१) | अ-स्य, अत, इतौ ९८ |
| अव्यक्तानुक-स्यात इतौ | ९८ नाम्रेडितस्यान्त्यस्य तुवा। (२) | |
| | (एकादेशे दीर्घ—) | |
| अचि | ९९ अकः सवर्णे दीर्घः । (३) | अकः १०५ दीर्घः १०४ |
| अकः, दीर्घः | १०० प्रथमयोः पूर्वसवर्णः । | पू-र्णः १०४ |
| | १०१ तस्माच्छसो नः पुंसि । | |
| पूर्वसवर्णदीर्घः | १०२ नादिचि । | न, इचि १०४ |
| इचि, पू-र्घः, न | १०३ दीर्घाज्जसि च । | दी-त्, जसि १०४ |
| दी-त्, जसि, इचि, पू-र्णदीर्घः | १०४ वा छन्दसि । | |
| | (एकादेशे पूर्वरूप—) | |
| अकः | १०५ अमि पूर्वः । | पूर्वः १०८ |
| अचि पूर्वः | १०६ सम्प्रसारणाच्च । | |
| पूर्वः | १०७ एङः पदान्तादति । | एङः, अति १२० |
| एङः, अति, पूर्वः | १०८ ङसिङसोश्च । | ङ-सोः ११० |
| | (एकादेशे उकारादेश—) | |
| ङसिङसोरति | १०९ ऋत उत् । | उत् ११२ |

१—(वा०) इतावनेकाज्ग्रहणं श्रदर्थम्।

२—(वा०) नित्यमाम्रेडिते डाचि।*

३—(वा०) (क) सवर्णदीर्घत्वे ऋति ऋ वा वचनम्। (ख) लृति लृ वा वचनम्।

*यद्यपि इदं वार्तिकं काशिकादिषु सूत्रत्वेन गृहीतं दृश्यते तथापि भाष्ये वार्तिकेषूपलम्भादस्माभिर्वार्तिकत्वेन संगृहीतम्।

| | | |
|---|---|---|
| ङसिङसोरत,उत् | ११० ख्यत्यात्परस्य । | |
| | (रोरुत्वविधि—) | |
| अति, उत् | १११ अतो रोरप्लुतादप्लुते । | अतः, रोः ११२ |
| अतो रोः, उत् | ११२ हशि च । | |
| | (प्रकृतिभाव—) | |
| एङः, अति | ११३ प्रकृत्यान्तःपादमव्यपरे । + | प्रकृत्या १२८ |
| ,, ,, प्र-त्या | ११४ अव्यादवद्यादवक्रमुरव्रतायम-वन्त्ववस्युषु च । | |
| एङः, अति, प्र-त्या | ११५ यजुष्युरः । | यजुषि ११९ |
| यजुषि, अति, प्रकृत्या | ११६ आपो जुषाणो वृष्णो वर्षिष्ठे अम्बे अम्बालेऽम्बिके पूर्वे । | |
| ,, ,, ,, | ११७ अङ्ग इत्यादौ च । | |
| ,, ,, ,, | ११८ अनुदात्ते च कुधपरे । | अनुदात्ते ११९ |
| यजुषि,अ-त्ते,अति,एङ्,प्रकृत्या | ११९ अवपथासि च । | |
| एङ्, अति, प्र-त्या | १२० सर्वत्र विभाषा गोः । | गोः १२२ |
| अचि, गोः | १२१ अवङ् स्फोटायनस्य । | अवङ् १२२ |
| गोः, अवङ् | १२२ इन्द्रे च । (१) | |
| प्रकृत्या | १२३ प्लुत-प्रगृह्या अचि नित्यम् । | अचि १२६ |
| अचि | १२४ आङोऽनुनासिकश्छन्दसि । | |
| अचि प्र-त्या | १२५ इकोऽसवर्णे शाकल्यस्य ह्रस्व-श्च । (२) | शा-स्य, ह्रस्वः १२६ |

---

+—'नान्तपादमव्यपरे' इति पा०।

१ काशिकादिषु केषुचित्पुस्तकेषु अत्र नित्यमित्यधिकम्।

२—(वा०) (क) सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः। (ख) ईषा अक्षादिषु प्रकृतिभावमात्रं वक्तव्यम्।

| | | |
|---|---|---|
| शा-स्य, ह्रस्वः प्र-त्या | १२६ ऋत्यकः । | |
| | (अप्लुतवत्--) | |
| | १२७ अप्लुतवदुपस्थिते । | अप्लुतवत् १२८ |
| अ-त् | १२८ ई ३ चाक्रवर्मणस्य । | |
| | १२९ दिव उत् । | |
| | (सुलोप--) | |
| | १३० एतत्तदोः सुलोपोऽकोरनञ्समासे हलि । | सुलोपः १३२, हलि १३१ |
| सु-पः, हलि | १३१ स्यश्छन्दसि बहुलम् । | |
| | १३२ सोऽचिलोपे चेत्पादपूरणम् । | |
| | (सुट्--) | |
| | १३३ सुट् कात्पूर्वः ।+ | सुट् १५४ |
| सुट् | १३४ संपर्युपेभ्यः करोतौ भूषणे । | सं-भ्यः १३५, करोतौ १३६ |
| सं-भ्यः, क-तौ | १३५ समवाये च । | |
| करोतौ | १३६ उपात् प्रतियत्न-वैकृत-वाक्याध्याहारेषु । | उपात् १३८ |
| उपात्, सुट् | १३७ किरतौ लवने । | किरतौ १३९ |
| उ-त्, सुट्, किरतौ | १३८ हिंसायां प्रतेश्च । | |
| सुट्, किरतौ | १३९ अपाचतुष्पाच्छकुनिष्वालेखने । (१) | |

---

+ 'सुट् कात्पूर्वः, इति सूत्रं भाष्ये खण्डितम् ।

अत्र 'अडभ्यासव्यवायेऽपि' इति सूत्रमुपलभ्यते परमेतद्विकृतवार्तिकम् । भाष्ये 'अड्व्यवाय उपसंख्यानम् ।' 'अभ्यासव्यवाये च' इति वार्तिकयोरुपलभ्यते । अस्माभिर्भाष्यानुसारं वार्तिकपाठे संगृहीतम् ।

१—(वा०) किरतेर्हर्षजीविकाकुलायकरणेषु ।

सुट् १४० कुस्तुम्बुरूणि जातौ ।

,, १४१ अपरस्पराः क्रियासातत्ये । (१)

,, १४२ गोष्पदं सेवितासेवित-प्रमाणेषु ।

,, १४३ आस्पदं प्रतिष्ठायाम् ।

,, १४४ आश्चर्यमनित्ये ।

,, १४५ वर्चस्केऽवस्करः ।

,, १४६ अपस्करो रथाङ्गम् ।

,, १४७ विष्किरः शकुनौ* वा । (२)

,, १४८ ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ।

,, १४९ प्रतिष्कशश्च कशेः ।

,, १५० प्रस्कण्व-हरिश्चन्द्रावृषी ।

,, १५१ मस्कर-मस्करिणौ वेणु-परिव्राजकयोः ।

१५२ कास्तीराजस्तुन्दे नगरे ।

१५३ कारस्करो वृक्षः । (३)

१५४ पारस्करप्रभृतीनि च संज्ञायाम् । (४)

---

१—(वा०) (क) समो हिततततयोर्वा लोपः। (ख) सम्तुमुनोः कामे। (ग) मनसि च। (घ) अवश्यमः कृत्ये।

*काशिकादिषु 'विष्किरः शकुनिर्विकिरो वा' इति सूत्रपाठः।

२—(वा०) विष्किरः शकुनौ विकिरो वा।

३—(वा०) केचिदिदं सूत्रं नाधीयते पारस्करप्रभृतिष्वेव 'कारस्करो वृक्ष' इति पठन्ति।

४—(गण०) पारस्करो देशः, कारस्करो वृक्षः, रथस्या नदी, किष्कुः प्रमाणम्, किष्किन्धा गुहा, तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च (तस्करः चोरः। बृहस्पतिः देवता।) प्रात्तुम्पतौ गवि कर्तरि (प्रस्तुम्पति गौः) आकृतिगणः। इति पारस्करादिः।

(अथ स्वरविधि—)

१५५ अनुदात्तं पदमेकवर्जम् । (१)

(अन्तोदात्त—)

१५६ कर्षात्वतो घञोऽन्त उदात्तः । अन्तः, १८२ उदात्तः २१६

अन्तोदात्तः १५७ उञ्छादीनां च । (२)

,, १५८ अनुदात्तस्य च यत्रोदात्तलोपः ।

अन्तोदात्तः १५९ धातोः ।

,, १६० चितः । चितः १६१

चितः, अ-त्तः १६१ तद्धितस्य । तद्धितस्य १६२

त-स्य, अ-त्तः १६२ कितः ।

अन्तोदात्तः १६३ तिसृभ्यो जसः ।

अन्तोदात्तः १६४ चतुरः शसि ।

उदात्तः १६५ सावेकाचस्तृतीयादिर्विभक्तिः । ए-चः, तृ-दिः, १६६ वि-क्तिः १८१

ए-चः, तृ-दिः, वि-क्तिः उ-त्तः १६६ अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे । अ-त् १७५

वि-क्तिः, उदात्तः १६७ अञ्चेश्छन्दस्यसर्वनामस्थानम् । अ-म् १७२

अ-म्, उदात्तः १६८ ऊडिदंपदाद्यप् पुम्रैद्युभ्यः ।

---

१—(वा०) (क) विभक्तिस्वरान्नञ्स्वरो बलीयानिति वक्तव्यम् । (ख) विभक्तिनिमित्तस्वराच्च नञ्स्वरो बलीयानिति वक्तव्यम् ।

२—(गण०) उञ्छ, म्लेच्छ, जञ्ज, जल्प (नल्प), जप, वध (व्यध का०), युग कालविशेषे रथाद्युपकरणे च । गरो दूष्ये, वेदवेगवेष्टवन्धाः (चेष्ट वेष्ट का०), करणे, स्तुयुद्रुवश्छन्दसि (परिष्टुत्, संयत्, परिद्रुत), वर्तनिः स्तोत्रे, श्वभ्रे दरः, साम्वतापौ भावगर्हायाम्, उत्तमशश्वत्तमौ सर्वत्र, भक्षमन्थभोगमन्थाः (भक्षमन्थभोगदेहाः का०) । इति उञ्छादिः ।

| | | |
|---|---|---|
| अ-म् उ-त्तः | १६९ अष्टनो दीर्घात् । | |
| ,, ,, | १७० शतुरनुमो नद्यजादी । (१) | नद्यजादी १७२ |
| न-दी, अ-म्, वि-क्तिः उ-त्तः | १७१ उदात्तयणो हल्पूर्वात् । (२) | उ-णः, ह-त् १७२ |
| ह-त्,उ-णः, न-दी,अ-म्,उ-त्तः | १७२ नोङ्धात्वोः । | |
| उदात्तः | १७३ ह्रस्वनुड्भ्यां मतुप् । (३) | मतुप् १७४ |
| मतुप्, उ-त्तः | १७४ नामन्यतरस्याम् । | |
| नाम्, उ-त्तः | १७५ ङ्याश्छन्दसि बहुलम् । | |
| उदात्तः | १७६ षट-त्रि-चतुर्भ्यो हलादिः । | ष-र्भ्यः १७८ |
| ष-र्भ्यः, उ-त्तः | १७७ झल्युपोत्तमम् । | झलि,उ-म् १७८ |
| ष-र्भ्यः, झलि, उ-म्, उ-त्तः | १७८ विभाषा भाषायाम् । | |
| उ-त्तः | १७९ न गो-श्वन्-साववर्ण-राडङ्-क्रुङ्-कृद्भ्यः । | न १८० |
| न, उ-त्तः | १८० दिवो झल् । | झल् १८१ |
| झल्, न, उ-त्तः | १८१ नृ चान्यतरस्याम् । | |
| | १८२ तित्स्वरितम् । | |
| | १८३ तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तमहन्विङोः । | ल-म् १८६ |
| | (आद्युदात्त—) | |
| उ-त्तः | १८४ आदिः सिचोऽन्यतरस्याम् ।(४) | आदिः, अ-म् १८५ |

---

१—(वा०) नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानम् ।

२—(वा०) उदात्तयणि हल्ग्रहणं नकारान्तार्थम् ।

३—(वा०) (क) मतुबुदात्तत्वे रेग्रहणम् । (ख) त्रेश्च प्रतिषेधो वक्तव्यः ।

४—(वा०) सिच आद्युदात्तत्वेऽनिटः पित उपसंख्यानम् ।

